केन संन्यासः संन्यासाधिकारी को वेति । एवमादौ संन्यासाधिकारिणं निरूप्य पश्चात्संन्यासविधिरुच्यते । अवहितः शृणु ।

अन्धः पण्डः पतितोऽङ्गविकलः स्त्रैणो बधिरोऽर्भको मूकः पाषण्डश्चक्री लिङ्गी वैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको वैराग्यवन्तोऽप्येते न संन्यासार्हाः । संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः । पूर्वसंन्यासी परमहंसाधिकारी ।

परेणैवात्मनश्चापि परस्यैवात्मना तथा ।
अभयं समवाप्नोति स परिव्राडिति स्मृतः ॥
पण्डोऽथ विकलोऽप्यन्धो बालकश्चापि पातकी ।

---

1 संन्यास. missing in d1 सन्यासाधिकारी को वेति d2-3, सन्यासाधिकारिको वेति d1, सन्यासाधिकारमेति M, सन्यासाधिकारी वेति other SR No एवम् in NR

1 अथ for अन्धः SR

5 वैखानसौ हरद्विजो (so) Ta, Gb, वैखानसो हरद्विजौ Ga

8—9 परमहसोऽधिकारी M

10 पर. श्यै° (?) for परस्यै° d2-3, परश्यै° (?) d1

12 बालकश्चातिपातकी Tb

पतितश्च परद्वारी वैखानसहरद्विजौ ॥
चक्री लिङ्गी च पाषण्डी शिपिविष्टोऽप्यनग्निकः ।
द्वित्रिवारेण संन्यस्तो भृतकाध्यापकोऽपि च ।
एते नार्हन्ति संन्यासमातुरेण विना क्रमम् ॥

आतुरकालः कथमार्यसंमतः ।

प्राणस्योत्क्रमणासन्नकालस्त्वातुरसंज्ञितः ।
नेतरस्त्वातुरः कालो मुक्तिमार्गप्रवर्तकः ॥
आतुरेऽपि च संन्यासे तत्तन्मन्त्रपुरःसरम् ।
मन्त्रावृत्तिं च कृत्वैव संन्यसेद्विधिवद्बुधः ॥
आतुरेऽपि क्रमे चापि प्रैषभेदो न कुत्रचित् ।
न मन्त्रं कर्मरहितं कर्म मन्त्रमपेक्षते ॥
अकर्म मन्त्ररहितं नातो मन्त्रं परित्यजेत् ।

---

5. आतुरस्य कथं कालः कथमार्यस्य संमतः । M; आतुरः काल एवार्यं कथमार्यस्य संमतः । NR.

6. °सन्नः काल° Tb.   संज्ञितः *ex conj.*: all the texts read °संज्ञिकः.

7. °प्रवर्तनः Tb, Ga; °प्रवर्तिनः T1.

10. क्रमो d2.   वापि B.

11. अपेक्ष्यते d1; अवेक्षते T1.

मन्त्रं विना कर्म कुर्याद्भस्मन्याहुतिवद्भवेत् ॥
विध्युक्तकर्मसंक्षेपात्संन्यासस्त्वातुरः स्मृतः ।
तस्मादातुरसंन्यासे मन्त्रावृत्तिविधिर्मुने ॥
आहिताग्निर्विरक्तश्चेद्देशान्तरगतो यदि ।
प्राजापत्येष्टिमप्स्वेव निर्वर्त्यैवाथ संन्यसेत् ॥
मनसा वाथ विध्युक्तमन्त्रावृत्त्याथवा जले ।
श्रुत्यनुष्ठानमार्गेण कर्मानुष्ठानमेव वा ।
समाप्य संन्यसेद्विद्वान्नो चेत्पातित्यमाप्नुयात् ॥
यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु ।
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये ॥
विरक्तः प्रव्रजेद्धीमान्सरक्तस्तु गृहे वसेत् ।
सरागो नरकं याति प्रव्रजन्हि द्विजाधमः ॥
यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं करः ।

---

2 निध्युक्त कर्म Tb

3 मन्त्रानृत्तिविधिर्मुने T1, G1, others मन्त्रावृत्तिर्विधिर्मुने

5 अप्सैव for अप्स्वेव AR    निर्वर्त्यैवाथ [illegible], निवृत्त्यैवाथ Tb, M, निर्वृत्त्यैव तु G1, निर्नृत्यैवाथ d1, निर्वृत्यै(त्ये)वाथ others

6 विध्युक्त मन्त्रा G1

संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान् ॥
संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥
प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥
यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेत् ॥
परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ।
सर्वैपणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति ॥
पूजितो वन्दितश्चैव सुप्रसन्नो यथा भवेत् ।
तथा चेत्ताड्यमानस्तु तदा भवति भैक्षभुक् ॥
अहमेवाक्षरं ब्रह्म वासुदेवाख्यमद्वयम् ।
इति भावो ध्रुवो यस्य तदा भवति भैक्षभुक् ॥
यस्मिञ्शान्तिः शमः शौचं सत्यं संतोप आर्जवम् ।

---

7. तदेकदण्डं SR save Ga  °वीतां *ex conj.*, °वीतं all.†
9. सर्वै° Tb-1, g ; others सर्वे°.
12—13 This Sloka is not in Ta
12 अव्ययम् for अद्वयम् Tb, Ga.

आकिंचन्यमदम्भश्च स कैवल्याश्रमे वसेत् ॥
[यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा तदा भवति भैक्षभुक् ॥
दशलक्षणकं धर्ममनुतिष्ठन्समाहितः ।
वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥
अतीतान्न स्मरेद्भोगान्न तथानागतानपि ।
प्राप्तांश्च नाभिनन्देद्यः स कैवल्याश्रमे वसेत् ॥]
अन्तःस्थानीन्द्रियाण्यन्तर्बहिःष्ठान्विषयान्बहिः ।
शक्नोति यः सदा कर्तुं स कैवल्याश्रमे वसेत् ॥
प्राणे गते यथा देहः सुखदुःखं न विन्दति ।

---

1 आकिंचन्यम् Tb, Ga M, others अकिंचनम्

2—9 These four Slokas are missing in NR, in Ga the first of them (यदा न कुरुते, etc) stands before not after यस्मिञ्शान्ति, etc (last line of preceding page)

7 ह्रीविद्या T1, g, श्रीविद्या Ta

12 प्रायो for प्राणे d1 3 यदा for यथा d1 सुख दु ख B.

तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ॥
कौपीनयुगलं कन्था दण्ड एकः परिग्रहः ।
यतेः परमहंसस्य नाधिकं तु विधीयते ॥
यदि वा कुरुते रागादधिकस्य परिग्रहम् ।
रौरवं नरकं गत्वा तिर्यग्योनिषु जायते ॥
विशीर्णान्यमलान्येव चेलानि ग्रथितानि तु ।
कृत्वा कन्थां वहिर्वासो धारयेद्धातुरञ्जितम् ॥
एकवासा अवासा वा एकदृष्टिरलोलुपः ।
एक एव चरेन्नित्यं वर्षास्वेकत्र संवसेत् ॥
कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेद्यतिः ॥
कामः क्रोधस्तथा दर्पो लोभमोहादयश्च ये ।
तांस्तु दोषान्परित्यज्य परिव्राण्निर्ममो भवेत् ॥

---

4. परिग्रहे NR.

6. चैलानि d2-3. ग्रन्थितानि NR.

11. गूढं चरेत् Ta, g, M, NR.

12. कामक्रोधस्तथा Tb-1, g, Ga, d1-3.

13 निर्मलो for निर्ममो Ga, g.

रागद्वेषवियुक्तात्मा समलोष्टाश्मकाञ्चनः ।
प्राणिहिंसानिवृत्तश्च मुनिः स्यात्सर्वनिःस्पृहः ॥
दम्भाहंकारनिर्मुक्तो हिंसापैशुन्यवर्जितः ।
आत्मज्ञानगुणोपेतो यतिर्मोक्षमवाप्नुयात् ॥
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं निगच्छति ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥
श्रुत्वा स्पृष्ट्वा च भुक्त्वा च दृष्ट्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥
यस्य वाङ्मनसे शुद्धे सम्यग्गुप्ते च सर्वदा ।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ॥

3 वन्धाहंकार॰ Ta

5 असंशयं Ga, g, others असंशय:

6 कृतान्येव for तु तान्येव g     नियच्छति Ta, M; स गच्छति Tb.

7. शाम्यते Ta

10 यः for वा NR, Tb, M

11. वाङ्मनसी M, B     मम्यगुप्ते NR

संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥
सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते ।
सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥
इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।

---

1 सन्मानाद् Tb, d1 उद्वेजेत Ta, G विषादि वा NR.

2. अमृतस्येव Ga only, others अमृतस्यैव

3 ह्यवमतं NR, ह्येव मतः Ta, d1

5 नानुमन्येत Tb

7 आक्रुष्टः d1, T1, g, M, आक्रुष्टः d2

8 °कीर्णं च NR, °कीर्णाश्च T1 अनृता B, अनृतं NR.

9. आध्यात्म° d3 निरामिषः *conj* (Manu VI, 49); निराशिषः all

अहिंसया च भूतानाममृतत्वाय कल्पते ॥
अस्थिस्थूणं स्नायुवद्धं मांसशोणितलेपितम् ।
चर्मावबद्धं दुर्गन्धि पूर्णं मूत्रपुरीपयोः ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥
मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ॥
सा कालसूत्रपदवी सा महावीचिवागुरा ।
सासिपत्रवनश्रेणी या देहेऽहमिति स्थितिः ॥
सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते ।
स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुल्कसी ॥

---

2 अस्थिस्थूणस्नायु° NR स्नायुबन्ध d1 2 °वेपन (for °लेपितम् ) with variant °वेपित Tb

3 दुर्गन्ध g, M, दुर्गन्ध° Ga

4 जरारोग° NR

5 रजस्वर° NR

6 °सहते M

8 कालपुत्रपदवी B महावाचि° d3

9. °वने श्रेणी NR देहो Ta b, M, d1 स्थित. M

11 स्प्रष्टव्या *cr (on)* , स्प्रष्टव्या all पुल्कसि NR

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य, ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥
अनेन विधिना सर्वांस्त्यक्त्वा सङ्गाञ्शनैःशनैः ।
सर्वद्वन्द्वैर्विनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायकः ।
सिद्धिमेकस्य पश्यन्हि न जहाति न हीयते ॥
कपालं वृक्षमूलानि कुचेलान्यसहायता ।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
एकारामः परिव्रज्य भिक्षार्थं ग्राममाविशेत् ॥
एको भिक्षुर्यथोक्तः स्याद् द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥

---

2. ब्रह्माप्नोति g.

3. सर्वं त्यक्त्वा T1. स्मृत्वा for त्यक्त्वा Tb सङ्गं g.

4 मर्वद्वन्द्वविनिर्मुक्तो NR

7. कुचैलान्यसहायतं d2-3.

10. भिक्षार्थी Ga.

11. यथोक्तस्य द्वावेव NR

इन्द्रियाणि समाहृत्य कूर्मोऽङ्गानीव सर्वशः ॥
क्षीणेन्द्रियमनोवृत्तिर्निराशीर्निष्परिग्रहः ।
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ॥
निर्ममो निरहंकारो निरपेक्षो निरामिषः ।
विविक्तदेशसंसक्तो मुच्यते नात्र संशय इति ॥

अप्रमत्तः कर्मभक्तिज्ञानसंपन्नः स्वतन्त्रो वैराग्य-मेत्य ब्रह्मचारी गृही वानप्रस्थो वा मुख्यवृत्तिका-मश्चेद्ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्र-व्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको वास्नातको वोत्पन्नाग्निरनग्निको वा यदहरेव विर-

2. °वृत्तिनिरा° d2-3.

1. निरामिषः M only; others निराशिषः

6. संपन्नस्वतन्त्रो NR, Ta.

7—8. °वृत्तिकामश्चेद्ब्रह्म° Ga only, °वृत्तिकाविद्ब्रह्म° M., °वृत्तिका चेद्ब्रह्म° others

9. चेतरथा g; वेतरथ NR.

11. वोत्पन्नाग्निः *cx conj.* (Jāb.Up.); वोत्सन्नाग्निः all. अना-ग्निको d1-2; अनुत्पन्नाग्निको Ga.

नटादिप्रेक्षणं द्यूतं प्रमादात्सुहृदं तथा ।
भक्ष्यं भोज्यमुदक्यां च पणन पश्येत्कदाचन ॥
रागं द्वेषं मदं मायां द्रोहं मोहं परात्मसु ।
षडेतानि यतिर्नित्यं मनसापि न चिन्तयेत् ॥
मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च ।
दिवास्वापं च यानं च यतीनां पातकानि षट् ॥
दूरयात्रां प्रयत्नेन वर्जयेदात्मचिन्तकः ।
सदोपनिषदं विद्यामभ्यसेन्मुक्तिहेतुकीम् ॥
न तीर्थसेवी नित्यं स्यान्नोपवासपरो यतिः ।
न चाध्ययनशीलः स्यान्न व्याख्यानपरो यतिः ॥
अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ।

---

1 प्रमादात् NR प्रमदा Gr M प्रमदा other SR
3 रागद्वेष la 1 g NR मायाद्रोह B NR
लो° for लौ° NI
6 पतनानि NR
8 सदौपनिषद d1 °से मुक्ति° NR °हैतुकीम् B
10 स्यानव्या° d1 3
11 अजिह्म Tb-1, NR

इन्द्रियाणि समाहृत्य कूर्मोऽङ्गानीव सर्वशः ॥
क्षीणेन्द्रियमनोवृत्तिर्निराशीर्निष्परिग्रहः ।
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ॥
निर्ममो निरहंकारो निरपेक्षो निरामिषः ।
विविक्तदेशसंसक्तो मुच्यते नात्र संशय इति ॥

अप्रमत्तः कर्मभक्तिज्ञानसंपन्नः स्वतन्त्रो वैराग्य-
मेत्य ब्रह्मचारी गृही वानप्रस्थो वा मुख्यवृत्तिका-
मश्चेद्ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्र-
व्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा
वनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको
वास्नातको वोत्पन्नाग्निरनग्निको वा यदहरेव विर-

2. °वृत्तिनिरा° d2-3.

1. निरामिषः M only; others निराशिषः

6. संपन्नस्वतन्त्रो NR, Ta.

7—8. °वृत्तिकामश्चेद्ब्रह्म° Ga only; °वृत्तिकाविद्ब्रह्म° M, °वृत्तिका चेद्ब्रह्म° others

9. चेतरथा g; वेतरथ NR.

11. वोत्पन्नाग्निः *ex conj.* (Jāb.Up.); वोत्सन्नाग्निः all. अना-ग्निको d1-2; अनुत्सन्नाग्निको Ga.

जेत्तदहरेव प्रव्रजेत् । तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति । अथवा न कुर्यात् । आग्नेयीमेव कुर्यात् । अग्निर्हि प्राणः प्राणमेवैतया करोति । पश्चात् त्रैधातवीयामेव कुर्यात् । एत एव त्रयो धातवो यदुत सत्त्वं रजस्तम इति ।

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥

इत्यनेन मन्त्रेणाग्निमाजिघ्रेत् । एष वा अग्नेर्योनिर्यः प्राणः, प्राणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेवैतदाह । आहवनीयादग्निमाहृत्य पूर्ववदग्निमाजिघ्रेत् । यदग्निं न विन्देदप्सु जुहुयात् । आपो वै सर्वा देवताः, सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वोद्धृत्य तदुदकं प्राश्नीयात् साज्यं

2 आग्नेयीमेव *ex conj* ; आग्नेयामेव all

3 अग्निरिति for अग्निर्हि NR. °मेवैतया d2-3, °मेवैतद्वा d1. पश्चात् *ex conj* (Jab Up), तस्मै d1, तस्मात् others

4 एत एव t only, others एतयैव

9 No प्राणः in d2-3, Ta

13 हुत्वोद्धृत्यास्तदुदकं NR.

हविरनामयं मोक्षदमिति । शिखां यज्ञोपवीतं पितरं पुत्रं कलत्रं कर्म चाध्ययनं मन्त्रान्तरं विसृज्यैव परिव्रजत्यात्मवित् । मोक्षमन्त्रस्त्रय्येवं विन्देत् । तद्ब्रह्म तदुपासितव्यम् । एवमेवैतदिति ।

पितामहं पुनः पप्रच्छ नारदः । कथमयज्ञोपवीती ब्राह्मण इति । तमाह पितामहः ।

[हृदिस्था देवताः सर्वाः हृदि प्राणाः प्रतिष्ठिताः ।
हृदि प्राणश्च ज्योतिश्च त्रिवृत्सूत्रं विदुर्बुधाः ॥]
सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥

— — — — —

1 शिखायज्ञो° Ta °वीतमग्नि पि t

2—3 विसृज्यैव d2-3, विन्यस्यैव T1

3—4 मोक्षमन्त्रस्त्रय्येवं विन्देत् (*ex conj* (Jab Up), texts read मोक्ष (मोक्षं d2-3) मन्त्रैस्त्रेधातवीयैर्विधेः (°वीयो विधे. d1, °दीयैर्विधैः M)

4 एवमेवैतदिति *ex conj* (Jab.Up), texts omit एवम्, Ta इति चैतदिति

6 तमुवाच for तमाह T1

7—8 This Sloka is missing in SR.

8 जीवश्च for ज्योतिश्च t त्रिवृत्सूत्रं च तद्विदुः t

सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ।
तत्सूत्रं विदितं येन स विप्रो वेदपारगः ॥
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शनः ॥
वहिःसूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः स चेतनः ।
धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ॥
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥
कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
तेभिर्धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥

---

3. प्रोक्तं for प्रोतं d2-3.

10. ज्ञानशिखा Ga, g; °शिखो Th. ज्ञाननिष्ठो NR.

15 एभिर्धार्यमिदं NR. वैदिकम् for वै स्मृतम् M.

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुरिति॥

तदेतद्विज्ञाय ब्राह्मणः परिव्रज्य परिव्राडेकशाटी मुण्डोऽपरिग्रहः शरीरक्लेशासहिष्णुश्चेत् । अथवा यथाविधिश्चेज्जातरूपधरो भूत्वा स्वपुत्रमित्रकलत्राप्तबन्ध्वादीन् स्वाध्यायं सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं च सर्वं कौपीनं दण्डमाच्छादनं च त्यक्त्वा द्वन्द्वसहिष्णुर्न शीतं न चोष्णं न सुखं न दुःखं न निद्रा न मानावमाने च षडूर्मिवर्जितो, निन्दाहंकारमत्सरगर्वदम्भेर्ष्यासूयेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहादीन्विसृज्य, स्ववपुः शवाकारमिव स्मृत्वा, स्वव्यतिरिक्तं सर्वमन्तर्बहिरमन्यमानः, कस्यापि वन्दनमकृत्वा ननमस्कारो नस्वाहाकारो नस्वधाकारो ननिन्दास्तुतिर्यादृच्छिको भवे-

3. तथैतद्विज्ञाय Tb
4. °क्लेशसहि° d1-2.
6 बन्ध्वादीन् Ta, M ; others बन्ध्वादीनि स्वाध्यायं च सर्व° NR. सर्वकर्माणि च संन्यस्यायं M.
9. निन्दा for निद्रा d1, t.

यदृच्छालाभसंतुष्टः सुवर्णादीन्न परिग्रहेन्नावाहनं न विसर्जनं न मन्त्रं नामन्त्रं न ध्यानं नोपासनं न लक्ष्यं नालक्ष्यं न पृथङ् नापृथङ् नाहन्नं नक्तं, सर्वत्रानिकेतः स्थिरमतिः शून्यागारवृक्षमूलदेवगृह-तृणकूटकुलालशालाग्निहोत्रशालाग्निदिगन्तरनदीतट-पुलिनभूगृहकन्दरनिर्झरस्थण्डिलेषु वने वा, श्वेतके-तुऋभुनिदाघवृषभदुर्वासःसंवर्तकदत्तात्रेयरैवतकवद-व्यक्तलिङ्गोऽव्यक्ताचारो बालोन्मत्तपिशाचवदनुन्म-त्तोन्मत्तवदाचरंस्त्रिदण्डं शिक्यं पात्रं कमण्डलुं क-

3 नाहन्नं नक्तं *om.* (Phs l p.) न त्वन्यत्त्वं (°त्वं) Ta-l. Ga g, न त्वन्यत्र others

4 °केतस्थिरमतिः dl Ga

5 अग्निचिदन्तर M  तटाक for तट M

6 स्थलेषु for स्थण्डिलेषु Tl  °लेषूपवने Ga, g

7 After निदाघ M inserts जडभरत  ऋषभ for वृषभ SR Before दत्तात्रेय M inserts सनत्सुजातवैदेहवटसिद्धशुकवामदेव

7-8 °रैवतकगोरक्षावधूतवदव्यक्त° M.

8-9 अनुन्मत्तोन्मत्तवद् SR save M., so NR but °त्तौ°, अनुन्मत्तोऽप्युन्मत्तवद् M

9 °चरन्ति दण्डं for °चरंस्त्रिदण्ड Tl, g

टिसूत्रं कौपीनं च तत्सर्वं भूः स्वाहेत्यप्सु परित्य-
जेत्, कटिसूत्रं च कौपीनं दण्डं वस्त्रं कमण्डलुं
सर्वमप्सु विसृज्याथ यथाजातरूपधरश्चरेदात्मान-
मन्विच्छेद्यथाजातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्व-
ब्रह्ममार्गे सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणा-
र्थं यथोक्तकाले करपात्रेणास्येन वा याचिताहार-
माहरन्, लाभालाभौ समौ कृत्वा निर्ममः शुक्ल-
ध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्मनिर्मूलनपरः
संन्यस्य पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति ब्रह्मप्रण-
वमनुस्मरन्भ्रमरकीटन्यायेन शरीरत्रयमुत्सृज्य सं-
न्यासेनैव देहत्यागं करोति स कृतकृत्यो भव-

1—2 M omits च तत्सर्वं —— च कौपीन परित्यजेत् *cc (om)*, परित्यज्य all

1—3 Instead of परित्यजेत् —— विसृज्याथ Ga has merely परित्यज्याथ

3 यथा added *cc (om)*, विसृज्याथ जातरूप° all

7 आहारयन् for आहरन् Ga, g लाभालाभयोः समो M, लाभलाभौ समो NR कृत्वा *cc (om)*, भूत्वा all

9 पर॰ for बोध d2 5

10 °कीटकन्यायेन Tb

तीत्युपनिषत् ॥

## तृतीयोपदेशः ॥

त्यक्त्वा लोकांश्च वेदांश्च विषयानिन्द्रियाणि च ।
आत्मन्येव स्थितो यस्तु स याति परमां गतिम् ॥
नामगोत्रादि चरणं देशं कालं श्रुतं फलम् ।
वयो वृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः ॥
न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां च न स्मरेत् ।
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ॥
एतच्चतुष्टयं मोहात्स्त्रीणामाचरतो यतेः ।
चित्तं विक्रियतेऽवश्यं तद्विकारात्प्रणश्यति ॥
तृष्णा क्रोधोऽनृतं माया लोभमोहौ प्रियाप्रिये ।
शिल्पं व्याख्यानयोगश्च कामो रागः परिग्रहः ॥

2 इति सिलसंहितोपनिषद्रहस्ये तृतीयोपदेशः ।

3 ॐ त्यक्त्वा etc. B  g inserts लोकांश्च after वेदांश्च
°यानीन्द्रि° d1-3

5 चरणं NR ; वरणं SR  देशकालं d3, M

7 असंभाषेत् M

9. °ष्टयमोहात् d1

12 °योगं च Ga, g  काम° Ta-1, Ga, g.  राग° M, B, d1

अहंकारो ममत्वं च चिकित्सा धर्मसाहसम् ।
प्रायश्चित्तं प्रवासश्च मन्त्रौषधगराशिषः ॥
प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः ॥
आगच्छ गच्छ तिष्ठेति स्वागतं सुहृदोऽपि वा ।
संमाननं च न ब्रूयान्मुनिर्मोक्षपरायणः ॥
प्रतिग्रहं न गृह्णीयान्नैव चान्यं प्रदापयेत् ।
प्रेरयेद्वा तथा भिक्षुः स्वप्नेऽपि न कदाचन ॥
जायाभ्रातृसुतादीनां बन्धूनां च शुभाशुभम् ।
श्रुत्वा दृष्ट्वा न कम्पेत शोकहर्षौ त्यजेद्यतिः ॥
अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहाः ।
अनौद्धत्यमदीनत्वं प्रसादः स्थैर्यमार्जवम् ॥
अस्नेहो गुरुशुश्रूषा श्रद्धा क्षान्तिर्दमः शमः ।
उपेक्षा धैर्यमाधुर्ये तितिक्षा करुणा तथा ॥

---

2. °गताशिषः M.
3. सेवमाने Ta
6. चान्ये NR.
10. °स्तेयं NR, Ta, M.
11 Pada°: अदाम्भिकत्वमदीनत्वं Ta  प्रसाद° d1-3; प्रह्लादः Ga.
13. स्थैर्यमाधुर्ये M.  तितिक्षौ करुणौ (so) d1-2.

ह्रीस्तथा ज्ञानविज्ञाने योगो लघ्वशनं धृतिः ।
एष स्वधर्मो विख्यातो यतीनां नियतात्मनाम् ॥
निर्द्वन्द्वो नित्यसत्त्वस्थः सर्वत्र समदर्शनः ।
तुरीयः परमो हंसः साक्षान्नारायणो यतिः ॥
एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र, वर्षासु मासांश्च चतुरो वसेत् ॥
द्विरात्रं न वसेद्ग्रामे भिक्षुर्यदि वसेत्तदा ।
रागादयः प्रसज्येरंस्तेनासौ नारकी भवेत् ॥
ग्रामान्ते निर्जने देशे नियतात्मानिकेतनः ।
पर्यटेत्कीटवद् भूमौ वर्षास्वेकत्र संवसेत् ॥
एकवासा अवासा वा एकदृष्टिरलोलुपः ।
अदूषयन्सतां मार्गं ध्यानयुक्तो महीं चरेत् ॥

---

1 ज्ञानविज्ञानयोगो d3

3. °स्थो for °स्थः NR

4 तुरीयपरमो d1

6. वर्षाभ्यो B only, सर्वाभ्यो others वर्षास्तु d3 Last Pada स मासांश्चतुरो वसेत M

8 नरकं व्रजेत् Tb 9 निर्जनदेशे d2

10 पर्यटन् 11 12 अदूषयेत् NR

शुचौ देशे सदा भिक्षुः स्वधर्ममनुपालयन् ।
पर्यटेत सदा योगी वीक्षयन्वसुधातलम् ॥
न रात्रौ न च मध्याह्ने संध्ययोर्नैव पर्यटेत् ।
न शून्ये न च दुर्गे वा प्राणिबाधाकरे न च ॥
एकरात्रं वसेद्ग्रामे पत्तने तु दिनत्रयम् ।
पुरे दिनद्वयं भिक्षुर्नगरे पञ्चरात्रकम् ।
वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजलावृते ॥
आत्मवत्सर्वभूतानि पश्यन्भिक्षुश्चरेन्महीम् ।
अन्धवत्कुब्जवच्चैव बधिरोन्मत्तमूकवत् ॥
स्नानं त्रिषवणं प्रोक्तं बहूदकवनस्थयोः ।
हंसे तु सकृदेव स्यात्परहंसे न विद्यते ॥
मौनं योगासनं योगस्तितिक्षैकान्तशीलता ।

---

1 सर्म for सदा Tb

2 वीक्षयेन् NR

3 पर्यटेत् NR, Ga, others पर्यटन

4 प्राण° NR °बाधकरे M °करेण च NR

5 पट्टने d1-3, पट्टणे d2

7 पूण° M

11 परमहंसो NR

निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनाम् ॥

परहंसाश्रमस्थो हि स्नानादेरविधानतः ।
अशेषचित्तवृत्तीनां त्यागं केवलमाचरेत् ॥

त्वङ्मांसरुधिरस्नायुमज्जामेदोऽस्थिसंहतौ ।
विण्मूत्रपूये रमतां क्रिमीणां कियदन्तरम् ॥

क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः ।
क्व चाङ्गशोभासौरभ्यकमनीयादयो गुणाः ॥

मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ॥

स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च ।
अभेदेऽपि मनोभेदाज्जनः प्रायेण वञ्च्यते ॥

चर्मखण्डं द्विधाभिन्नमपानोद्गारधूपितम् ।

---

7 Pad1° क चाङ्गसौरभिशोभा M  चाङ्गे d2  सौरभ्य NR, T1, G1, सौन्दर्य Ta, सौभाग्य others

9 नरकी d1

10 स्त्रीमामवाच्य° d1, स्त्रीछामवाच्य° d9  °दशस्य d3

11 ज्ञानः for जन T6, जन M  अभाण उच्यते M, प्रायेण वंचते d1, प्रायेण वंचने d2

12 दूपितम् for धूपितम् T1, M

ये रमन्ति नमस्तेभ्यः साहसं किमतः परम् ॥
न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः ।
निर्ममो निर्भयः शान्तो निर्द्वन्द्वोऽवर्णभोजनः ॥
मुनिः कौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः ।
एवं ध्यानपरो योगी ब्रह्मभूयाय कल्पते ॥
लिङ्गे सत्यपि खल्वस्मिञ्ज्ञानमेव हि कारणम् ।
निर्मोक्षायेह भूतानां लिङ्गग्रामो निरर्थकः ॥
यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥
तस्मादलिङ्गो धर्मज्ञो ब्रह्मव्रतमनुव्रतः ।
गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ॥
संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥

---

3 निर्द्वय॰ for निर्भयः Tb All the texts have वर्ण॰ for ऽवर्ण॰, M, however, reads पर्ण॰

5 ध्यानपरो M only, ज्ञानपरो others

8 न श्रुतं NR

10 ॰व्रतम् *a conj*, ॰वृत्तम् all अनुवृत्तम B

11 गूढे dI विद्वान्नज्ञात॰ NR ॰तश्चरेत् Ga

तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकसः ।
लिङ्गाभावात्तु कैवल्यमिति ब्रह्मानुशासनमिति ॥

अथ नारदः पितामहं संन्यासविधिं नो ब्रूहीति पप्रच्छ । पितामहस्तथेत्यङ्गीकृत्यातुरे वा क्रमे वापि तुरीयाश्रमस्वीकारार्थं कृच्छ्रप्रायश्चित्तपूर्वकमष्टश्राद्धं कुर्याद्देवर्षिदिव्यमनुष्यभूतपितृमात्रात्मेत्यष्टश्राद्धानि कुर्यात् । प्रथमं सत्यवसुसंज्ञकान्विश्वान्देवान्, देवश्राद्धे ब्रह्मविष्णुमहेश्वरान्, ऋषिश्राद्धे देवर्षिक्षत्रियर्षिमनुष्यर्षीन्, दिव्यश्राद्धे वसुरुद्रादित्यरूपान्, मनुष्यश्राद्धे सनकसनन्दनसनातनसनत्कुमारसनत्सुजातान्, भूतश्राद्धे पृथिव्यादि-

---

2 लिङ्गभावात्तु NR \o इति d1

5—6 पूर्वकमात्मश्राद्ध SR save M, B

6—7 M omits देवापदिव्यमनुष्यभूतपितृमात्रात्मेत्यष्टश्राद्धानि कुर्यात्

7 प्रथमसत्य° d1 वस्तु for वसु d3, वसु d1 सञ्ज्ञकान् B only, others सज्ञिकान्

10 दित्यस्वरूपान् Ga

10—11 सनातन missing in SR

पञ्चमहाभूतानि चक्षुरादिकरणानि चतुर्विधभूतग्रा-
मान्, पितृश्राद्धे पितृपितामहप्रपितामहान्, मा-
तृश्राद्धे मातृपितामहीप्रपितामहीः, आत्मश्राद्धे
आत्मपितृपितामहान्, जीवत्पितृकश्चेत्पितरं त्यक्त्वा
आत्मपितामहप्रपितामहानिति । सर्वत्र युग्मक्लृप्त्या
ब्राह्मणानर्चयेत् । एकाध्वरपक्षेऽष्टाध्वरपक्षे वा स्व-
शाखानुगतमन्त्रैरष्टश्राद्धान्यष्टदिनेषु वा एकदिने वा
पितृयागोक्तविधानेन ब्राह्मणानभ्यर्च्य भुक्तवन्तं य-
थाविधि निर्वर्त्य, पिण्डप्रदानानि निर्वर्त्य, दक्षि-
णाताम्बूलैस्तोषयित्वा ब्राह्मणान्प्रेषयित्वा, शेषकर्म-

3 °श्राद्धे (no Sandhi) all

4 No आत्म in Ta   जीवपितृ° Ta-b-I

4—5 त्यक्त्वा आत्मश्राद्धे आत्मा अन्तरात्मा परमात्मान् ॥ इति सर्वत्र NR

5 व्याप्त्या for क्लृप्त्या Tb, nothing in T1

6 ऽष्टाक्षरपक्षे NR

7 दिने for दिनेषु NR   एकदिनेऽपि वा Ta

8 भुक्तवन्तं d3, B, भुक्तवन्तं d2, G1

9 निवृत्य for निर्वर्त्य Ta-b, M, विनिवृत्य d2-3, निवृत्या d1 निर्वर्त्य Ta only, others निर्वृत्य   M inserts म before दक्षि°.

सिद्ध्यर्थं सप्तकेशान्विसृज्य शेषकर्मसिद्ध्यर्थं के-
शान्सप्ताष्ट वा द्विजः संक्षिप्य वापयेत्केशश्मश्रु
नखानि चेति सप्तकेशान्संरक्ष्य कक्षोपस्थवर्जं
क्षौरपूर्वकं स्नात्वा, सायंसंध्यावन्दनं निर्वर्त्य, स-
हस्रगायत्रीं जप्त्वा, ब्रह्मयज्ञं निर्वर्त्य, स्वाधीना-
ग्निमुपस्थाप्य, स्वशाखोपसंहरणं कृत्वा, तदुक्तप्र-
कारेणाज्याहुतिमाज्यभागान्तं हुत्वाहुतिविधिं समा-
प्य, आत्मादिभिस्त्रिवारं सक्तुप्राशनं कृत्वा, आ-
चमनपूर्वकमग्निं संरक्ष्य, स्वयमग्नेरुत्तरतः कृष्णा-
जिनोपरि स्थित्वा, पुराणश्रवणपूर्वकं जागरणं कृत्वा,
चतुर्थयामान्ते स्नात्वा, तदग्नौ चरुं श्रपयित्वा, पु-

---

1 °सिद्ध्यर्थे d2   विसृज्याशेष d2 3, Ta   निवृत्यर्थं for सिद्ध्यर्थं[3] M

2 सप्ताष्टौ वा Gı   सक्षेप्य Tb

3 संरक्ष foı सरक्ष्य NR

4 क्षारपूर्वक d1   निर्वर्त्य Gı, Pa, others निर्वृत्य

5 °गायत्री जप्त्वा NR   निर्वर्त्य T1, G›, निर्वृत्य others

6 उपसंस्थाप्य NR

10 °पूर्वकज़ागरण Tb

रुपसूक्तेनान्नं षोडशाहुतीर्हुत्वा, विरजाहोमं कृत्वा, अथाचम्य, सदक्षिणं वस्त्रं सुवर्णपात्रं धेनुं दत्वा, समाप्य, ब्रह्मोद्वासनं कृत्वा,

सं मा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः। सं मायमग्निः सिञ्चत्वायुषा च धनेन च बलेन चायुष्मन्तं करोतु मा ॥ इति।

या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानम्।
अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि।
यज्ञो भूत्वा यज्ञमासीद स्वां योनिं।
जातवेदो भुव आजायमानः सक्षय एहि ॥

इत्यनेनाग्निमात्मन्यारोप्य, ध्यात्वाग्निं, प्रदक्षिणनमस्कारपूर्वकमुद्वास्य, प्रातः संध्यामुपास्य, सहस्र-

1 षोडशाहुतिं हुत्वा Ga

2 सुवर्णपात्रं T1, M, others सुवर्ण पात्रं

4 शिंचतु NR स बृहस्पतिः NR

6 चायुष्मन्तं Ga, M, others चायुष्मन्तः

8 कुर्वन्नस्मन्नर्या NR

10 जातवेदाद्भुव d1, ॰दाभुव Ga सं क्षय d3 (स्वक्षय Manava-Srauta-Sutra I, 6, 3, 3)

12 ॰पूर्वक उद्वास्य NR

गायत्रीपूर्वकं सूर्योपस्थानं कृत्वा, नाभिदघ्नोदकमुपाविश्य, अष्टदिक्पालकार्घ्यपूर्वकं गायत्र्युद्वासनं कृत्वा, सावित्रीं व्याहृतिषु प्रवेशयित्वा,

अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव ।
ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि ।
द्रविणं सवर्चसं । सुमेधा अमृतोऽक्षितः ॥
इति त्रिशङ्कोर्वेदानुवचनम् ।

यश्छन्दसामृषभो विश्वरूपः ।
छन्दोभ्योऽध्यमृतात्संबभूव ।
स मेन्द्रो मेधया स्पृणोतु ।
अमृतस्य देव धारणो भूयासं ॥
शरीरं मे विचर्षणं ।
जिह्वा मे मधुमत्तमा ।

---

1 दग्धो for दघ्नो d1-2, दाध्यो d3

2 °पालकतर्पणपूर्वक Ta    3 साविनी NR

4 कीर्तिपृष्ठ NR    5 ऊर्ध्वे d2

6 सुवर्चस Ga    Our texts, as often, have no Avagraha, but ऽक्षित is Bhaṭṭabhāskara's reading and the one preferred, as it seems, by Śaṅkara (see the comm on Taitt Ār VII, 10, 1 and Taitt Up I, 10 resp)

कर्णाभ्यां भूरि विश्रवं ।

ब्रह्मणः कोशोऽसि मेधयापिहितः ।

श्रुतं मे गोपाय ॥

दारैषणायाश्च धनैषणायाश्च लोकैषणायाश्च व्युत्थितोऽहम् । ओं भूः संन्यस्तं मया ओं भुवः संन्यस्तं मया ओं सुवः संन्यस्तं मया, ओं भूर्भुवःसुवः संन्यस्तं मयेति मन्द्रमध्यतारध्वनिभिर्मनसा वाचोच्चार्य, अभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते स्वाहेत्यनेन जलं प्राश्य प्राच्यां दिशि पूर्णाञ्जलिं प्रक्षिप्य ओं स्वाहेति शिखामुत्पाट्य,

यज्ञोपवीतं परमं पवित्रं
प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं
यज्ञोपवीतं बलमस्तु तेजः ॥

1. विश्रुवं d1, Ta, M.

7. मन्द for मन्द्र d2-3, Ga. मध्यम for मध्य NR, Ga. तार Ga, M ; ताडन Ta-1 ; तालन NR ; ताळज others.

9. No स्वाहा in d1-2, Tb, M.

यज्ञोपवीतं वहिर्न निवसेत्

त्वमन्तः प्रविश्य मध्ये ह्यजस्रं ।

परमं पवित्रं यशो वलं

ज्ञानवैराग्यं मेधां प्रयच्छ ॥

यज्ञोपवीतं छित्वा, उदकाञ्जलिना सह ओं समुद्रं गच्छ स्वाहेत्यप्सु जुहुयात् । ओं भूः संन्यस्तं मया ओं भुवः संन्यस्तं मया ओं सुवः संन्यस्तं मयेति त्रिरुक्त्वा, त्रिवारमभिमन्त्र्य तज्जलं प्राश्याचम्य, ओं भूः स्वाहेत्यप्सु वस्त्रं कटिसूत्रमपि विसृज्य, सर्वकर्मनिवर्तकोऽहमिति स्मृत्वा, जातरूपधरो भूत्वा, स्वरूपानुसंधानपूर्वकमूर्ध्ववाहुरुदीचीं गच्छेत् ।

पूर्ववद्विद्वत्संन्यासी चेत् । गुरोः प्रणवमहावाक्योपदेशं प्राप्य, यथासुखं विहरन्मत्तः कश्चिन्ना-

1 ज्ञान वैराग्य G1, M

10 सिमर्तको T2, G2, M, others निर्वर्तको

12 गच्छति Th

13 B inserts सकाशात् after °गुरो

न्यो व्यतिरिक्त इति, फलपत्त्रोदकाहारः, पर्वत-वनदेवालयेषु संचरेत् । संन्यस्याथ दिगम्बरः सकलसंचारकः सर्वदानन्दस्वानुभवैकपूर्णहृदयः कर्मातिदूरलाभः प्राणधारणपरायणः फलरसत्वक्पत्त्रमूलोदकैर्मोक्षार्थी गिरिकन्दरेषु विसृजेद्देहं स्मरंस्तारकम् ।

विविदिषासंन्यासी चेच्छतपथं गत्वाचार्यादिभिर्विप्रैः 'तिष्ठ तिष्ठ महाभाग, दण्डं वस्त्रं कमण्डलुं गृहाण, प्रणवमहावाक्यग्रहणार्थं गुरुनिकटमागच्छ' इत्यादिष्ट आचार्यैर्दण्डं कटिसूत्रकौपीनं शाटीमेकां कमण्डलुं, पादादिमस्तकप्रमाणमव्रणं समं सौम्यमकाकपृष्ठं सलक्षणं वैणवं दण्डमेकमाचमनपूर्वकं

1 °पात्त्रो° d2-3, मात्त्रो° d1

2 देवालयेषु NR, Tr, Gr, others देवतालयेषु

3 सकलभूसंचारक. Gr, °क' M only, others °कं

4 प्रणव for प्राण NR

10 आदिष्ट Ga, M only, missing in others दण्डं कटि° d1-3, Ga, M, दण्डकटि° others कटिसूत्रं कौपीनं Ga, M

'सखा मा गोपायौजः सखा योऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारय' इति परिग्रहेत् । 'जगज्जीवनं जीवनाधारभूतं मातेव मा मन्त्रयस्व सर्वदा सर्वसौम्य' इति प्रणवपूर्वकं कमण्डलुं परिगृह्य, 'कौपीनाधारं कटिसूत्रमोम्' इति 'गुह्याच्छादकं कौपीनमोम्' इति 'शीतवातोष्णत्राणकरं देहैकरक्षणं वस्त्रमोम्' इति कटिसूत्रकौपीनवस्त्रम्, आचमनपूर्वकं योगपट्टाभिषिक्तो भूत्वा, कृतार्थोऽहमिति मत्वा स्वाश्रमाचारपरो भवेदित्युपनिषत् ॥

चतुर्थोपदेशः ॥

अथ हैनं पितामहं नारदः पप्रच्छ । भगवन् सर्वकर्मनिवर्तकः संन्यास इति त्वयैवोक्तं, पु-

---

3 All save T1 insert दण्डं before परिग्रहेत् परिगृहेत T1, g मातेव (r conj (Bsi Up), माते मा all

4 सर्वदा thrice in d2

6 गुह्याच्छादनं Tb M No वात in NR

7 वस्त्रम G4, M only, missing in others

7—8 कटिसूत्रं कौपीनं वस्त्रं Ga, M

13 °निर्वर्तक T1 त्वयैवोक्त Ga only, त्वयैवोक्त. others

नः स्वाश्रमाचारपरो भवेदित्युच्यते । ततः पितामह उवाच । शरीरस्थस्य देहिनो जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाः सन्ति । तदधीनाः कर्मज्ञानवैराग्यप्रवर्तकाः पुरुषा जन्तवस्तदनुकूलाचाराः सन्ति । तथैव चेद्भगवन्संन्यासाः कतिभेदास्तदनुष्ठानभेदाः कीदृशास्तत्त्वतोऽस्माकं वक्तुमर्हसीति । तथेत्यङ्गीकृत्य तं पितामहेन संन्यासभेदैराचारभेदः कथितः । कथमिति चेत् –

तत्त्वतस्त्वेक एव संन्यासः, अज्ञानेनाशक्तिवशात्कर्मलोपतश्च त्रैविध्यमेत्य, वैराग्यसंन्यासो ज्ञानसंन्यासो ज्ञानवैराग्यसंन्यासः कर्मसंन्यासश्चेति चातुर्विध्यमुपागतः । तद्यथेति । दुष्टमदनाभावा-

---

2 शरीरस्थस्य Ga only , शरीरस्य others

4 जन्तवास्तद° (?) NR

6 तत्ततोऽस्माकं d1-2

7 तथैवेत्यङ्गीकृत्य Gc

8 कथितः Ga, M , missing in others

9 अज्ञानाशक्ति° NR, Gc

10 °लोपतश्च Ga (om) , °लोपश्च all

12—1 (p १७२) दुष्टदमनाभावात् NR , दुष्टमदनभावात् M

च्चेत्यविषयवैतृष्ण्यमेत्य प्राक्पुण्यकर्मवशात्संन्यस्तः स वैराग्यसंन्यासी । शास्त्रज्ञानात्पुण्यलोकानुभवश्रवणात्प्रपञ्चोपरतः क्रोधेर्ष्यासूयाहङ्काराभिमानात्मकसर्वसंसारं निवर्त्य दारैषणाधनैषणालोकैषणात्मकदेहवासनां शास्त्रवासनां लोकवासनां त्यक्त्वा वमनान्नमिव प्राकृतिकं सर्वमिदं हेयं मत्वा साधनचतुष्टयसंपन्नो यः संन्यस्यति स एव ज्ञानसंन्यासी । क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन देहमात्रावशिष्टः संन्यस्य जातरूपधरो भवति स ज्ञानवैराग्यसंन्यासी । ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वै-

°भावाञ्चेत्यविषय° *ed conj*, °भावाश्चेति विषय° AR, Ta 1, G2-6, g, °भावाञ्चेति विषय° Tb, M, B †

3 अभिमानात्मक G1, कस्य g

4 निवर्त्य *ed conj*, निवृत्य Ta-1, निर्वर्त्य Tb M, निर्वृत्य others दारैषणाधनैषणालोकैषणा AR, G1, दारैषणधनैषणलोकैषणा Tb

6 प्राकृतिकं *ed conj*, प्रकृत G2, M, प्रकृतीय *others* (प्रवृत्ति B31 Up)

10 जातरूपो d1

राग्याभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति स कर्मसंन्यासी ।

ब्रह्मचर्येण संन्यस्य संन्यासाज्जातरूपधरो वैराग्यसंन्यासी । विद्वत्संन्यासी ज्ञानसंन्यासी । विविदिषासंन्यासी कर्मसंन्यासी । कर्मसंन्यासोऽपि द्विविधः निमित्तसंन्यासोऽनिमित्तसंन्यासश्चेति । निमित्तस्त्वातुरः । अनिमित्तः क्रमसंन्यासः । आतुरः सर्वकर्मलोपः प्राणस्योत्क्रमणकालसंन्यासः स निमित्तसंन्यासः । दृढाङ्गो भूत्वा सर्वं कृतकं नश्वरमिति देहादिकं सर्वं हेयं प्राप्य

हंसः शुचिषद्वसुरन्तरिक्षस-
द्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥

ब्रह्मव्यतिरिक्तं सर्वं नश्वरमिति निश्चित्य क्रमेण यः संन्यस्यति स संन्यासोऽनिमित्तसंन्यासः ।

5. Ga, M add चेति चतुर्धा after कर्मसंन्यासी

16. NR omits स.

संन्यासः षड्विधो भवति कुटीचको बहूदको हंसः परमहंसस्तुरीयातीतोऽवधूतश्चेति । कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमात्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः । बहूदकः शिखाकन्थादिधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याष्टकवलाशी । हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंक्लृप्तमाधुकरान्नाशी कौपीनखण्डतुण्डधारी । परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेष्वेकान्नादनपरः करपात्री

---

3 °वीत° Ga, M, °वीति° AR

4 °खनित्र° AR

5 मात्र *as em.* (Bst Up), °मत्र° all   No पर all, परा d2-3   एकत्रान्नदानपर Ta, एकत्रान्नापरादनपर all

6 शिखाकन्थादिधर° M only, शिखाकन्थाधर° Ga, शिखादिकन्थाधर other SR, so AR, but no Visarga (स्)

7 माधु° for मधु° M

8 °धारी अस° (no Sandhi) all   °मधु° for माधु° AR

10 °ष्वेवान्ना *as em.*, °ष्वेकान्नान्ना° SR, °ष्वेकरान्नान्न° AR

10—1 पात्री एक (no Sandhi) all save M, °पात्र एक° M

एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेक-
शाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी । तुरी-
यातीतो गोमुखः फलाहारी, अन्नाहारी चेद्गृहत्रये,
देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः ।
अवधूतस्त्वनियमोऽभिशस्तपतितवर्जनपूर्वकं सर्ववर्णे-
ष्वजगरवृत्त्याहारपरः स्वरूपानुसंधानपरः ।

आतुरो जीवति चेत्क्रमसंन्यासः कर्तव्यः कु-
टीचकबहूदकहंसानां । ब्रह्मचर्याश्रमादितुरीयाश्रम-
वत्कुटीचकादीनां संन्यासविधिः । परमहंसादित्र-
याणां न कटिसूत्रं न कौपीनं न वस्त्रं न क-
मण्डलुर्न दण्डः सार्ववर्णिकभिक्षाटनपरत्वं जात-
रूपधरत्वं विधिः ।

संन्यासकाले त्वलंबुद्धिपर्यन्तमधीत्य तदनन्तरं

---

4. कुणपमिव शरीर° M. वर्तिकः for वृत्तिकः NR.

11. T1 omits न दण्डः. °वर्णिकभिक्षा° Ga, M; °वर्णैकभैक्षा° others.

12. °धरत्वविधिः d1.

13. त्वलं d1 only; त्यलं d2-3; फल° M; प्यलं others.

संन्यासः षड्विधो भवति कुटीचको बहूदको हंसः परमहंसस्तुरीयातीतोऽवधूतश्चेति । कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमात्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः । बहूदकः शिखाकन्थादिधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याष्टकवलाशी । हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंक्लृप्तमाधुकरान्नाशी कौपीनखण्डतुण्डधारी । परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेष्वेवान्नादनपरः करपात्री

---

3 °वीत Ga, M, °वीति° NR

4 °खनित्र° NR

5 मात्र *conj* (Bra Up), °मन्त्र° all  No पर d1, परा d2-3  एकत्रान्नदानपरः Ta, एकत्रान्नापरादनपरः d1.

6 शिखाकन्थादिधरः M only, शिखाकन्थाधरः Ga, शिखादिकन्थाधरः other SR, so NR, but no Visarga (स्)

7 माधु° for मधु° M

8 °धारी असं° (no Sandhi) all  °मधु° for °माधु° NR

10 °ष्वेवान्ना° *[illegible]*, °ष्वेकात्रान्ना° SR, °ष्वेकरात्रान्न° NR

10—1. °पात्री एक (no Sandhi) all save M, °पात्र एक° M

एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेक-
शाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी । तुरी-
यातीतो गोमुखः फलाहारी, अन्नाहारी चेद्गृहत्रये,
देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः ।
अवधूतस्त्वनियमोऽभिशस्तपतितवर्जनपूर्वकं सर्ववर्णे-
ष्वजगरवृत्त्याहारपरः स्वरूपानुसंधानपरः ।

आतुरो जीवति चेत्क्रमसंन्यासः कर्तव्यः कु-
टीचकबहूदकहंसानां । ब्रह्मचर्याश्रमादितुरीयाश्रम-
वत्कुटीचकादीनां संन्यासविधिः । परमहंसादित्र-
याणां न कटिसूत्रं न कौपीनं न वस्त्रं न क-
मण्डलुर्न दण्डः सार्ववर्णिकभिक्षाटनपरत्वं जात-
रूपधरत्वं विधिः ।

संन्यासकाले त्वलंबुद्धिपर्यन्तमधीत्य तदनन्तरं

1 कुणपमिव शरीर॰ M वर्तिक for वृत्तिक NR

11 P1 omits न दण्ड वर्णिकभिक्षा॰ Gr, M, ॰वर्णकभैक्षा॰ others

12 ॰धरत्वविधि d1

13 त्वल d1 only, त्यल d2 3, फल॰ M, प्यल others

कटिसूत्रं कौपीनं दण्डं वस्त्रं कमण्डलुं सर्वम-
प्सु विसृज्याथ जातरूपधरश्चरेन्नकन्थालेशः । ना-
ध्येतव्यो न वक्तव्यो न श्रोतव्यमन्यत्किंचित् ।
प्रणवादन्यं न तर्कं पठेन्न शब्दमपि । वहूञ्छ-
ब्दान्नाध्यापयेन्न महद्वाचो विग्लापनं गिरा पाण्या-
दिना संभाषणं, नान्यभाषाविशेषेण, न शूद्रस्त्री-
पतितोदक्यासंभाषणं । न यतेर्देवपूजा उत्सव-
दर्शनं तीर्थयात्रावृत्तिः ।

पुनर्यतिविशेषः । कुटीचकस्यैकत्र भिक्षा, बहू-
दकस्यासंक्लृप्तमाधूकरं, हंसस्याष्टगृहेष्वष्टकबलं, पर-

1 कटिसूत्रकौपीन M

2 कथालेशो d1

3 वक्तव्य d1, व्या d2 3 वक्तव्यो m sing in B

4 पठेत् ॥ न शब्दमपि वहून् etc. MR बृहत् for वहून् B

5 नाध्यापयेन्न d1 2 नाध्यायेन्न others प्राण्यादिना M

6 विशेषण M

7 °क्यादिस M पूजा उत्सव [illegible] पूजनोत्सव G1, पूजानुत्सव° others

8 दर्शन न तीर्थ° G2 °यात्रानिवृत्ति M

9 कुटीचकस्येत्येकत्र M

10 °गृहेष्टकवल T1

महंसस्य पञ्चगृहेषु करपात्रं, फलाहारो गोमुखं तु-
रीयातीतस्य, अवधूतस्याजगरवृत्तिः सार्ववर्णिकेषु ।
यतिर्नैकत्र वसेत् । न कस्यापि नमेत् । तुरीया-
तीतावधूतयोर्न ज्येष्ठः । यो न स्वरूपज्ञः स ज्ये-
ष्ठोऽपि कनिष्ठः । हस्ताभ्यां नद्युत्तरणं न कुर्यान्न
वृक्षमारोहेन्न यानादिरूढो न क्रयविक्रयपरो न
किंचिद्विनिमयपरो न दाम्भिको नानृतवादी । न
यतेः किंचित्कर्तव्यमस्ति । अस्ति चेत्सांकर्यम् ।
तस्मान्मननादौ संन्यासिनामधिकारः ।

आतुरकुटीचकयोर्भूर्लोकभुवर्लोकौ, बहूदकस्य स्व-
र्गलोको, हंसस्य तपोलोकः, परमहंसस्य सत्यलो-

1. करपात्रफलाहारो Tb फलाहरो d2-3, फलाहार॰ M

3. यतिर्नैकत्र वसेन ,, com , यतिर्नैकरात्रीर्वसेन M, यतिर्नैकरात्रि-
वसेन् NR, यतिर्नैकरात्रं वसेन् others.

4—5 ज्येष्ठे नतिः स्वरूपज्ञे ज्येष्ठेऽपि कनिष्ठः M, ज्येष्ठयोः न स्वरूपज्ञः
etc, T1 (for ज्येष्ठः । यो न स्वरूपज्ञः etc).

5 ऽपि न कनिष्ठहस्ताभ्यां d1

6 वृक्षमारोहयेन्न NR. यानाद्धि d1, यानाभ्रि d2-3.

7 विनियमपरो NR.

7—8 नान्यतरयतेः for नानृतवादी न यतेः M.

कटिसूत्रं कौपीनं दण्डं वस्त्रं कमण्डलुं सर्वमप्सु विसृज्याथ जातरूपधरश्चरेन्नकन्थालेशः । नाध्येतव्यो न वक्तव्यो न श्रोतव्यमन्यत्किंचित् । प्रणवादन्यं न तर्कं पठेन्न शब्दमपि । बहूञ्छब्दान्नाध्यापयेन्न महद्वाचो विग्लापनं गिरा पाण्यादिना संभाषणं, नान्यभाषाविशेषेण, न शूद्रस्त्रीपतितोदक्यासंभाषणं । न यतेर्देवपूजा उत्सवदर्शनं तीर्थयात्रावृत्तिः ।

पुनर्यतिविशेषः । कुटीचकस्यैकत्र भिक्षा, बहूदकस्यासंक्लृप्तमाधूकरं, हंसस्याष्टगृहेष्वष्टकबलं, पर-

1 कटिसूत्रकौपीन M

2 कथालेशो d1

3 वक्तव्य d1, °व्या d2 3 वक्तव्यो missing in B

4 पठेत् ।। न शब्दमपि बहून् etc. NR बृहत् for बहून् B

5 नाध्यापयेन्न d1 2, नाध्यायेन्न others प्राण्यादिना M

6 °विशेषण M

7 °क्यादिस° M पूजा उत्सव ( ( m) , पूजनोत्सव° G1, पूजानुत्सव° others

8 °दर्शन न तीर्थ° G1 °यात्रानिवृत्ति M

9 कुटीचकस्यैत्येकत्र M

10 °गृहेष्वष्टकबल T1

महंसस्य पञ्चगृहेषु करपात्रं, फलाहारो गोमुखं तुरीयातीतस्य, अवधूतस्याजगरवृत्तिः सार्ववर्णिकेषु । यतिर्नैकत्र वसेत् । न कस्यापि नमेत् । तुरीयातीतावधूतयोर्न ज्येष्ठः । यो न स्वरूपज्ञः स ज्येष्ठोऽपि कनिष्ठः । हस्ताभ्यां नद्युत्तरणं न कुर्यान्न वृक्षमारोहेन्न यानादिरूढो न क्रयविक्रयपरो न किंचिद्विनिमयपरो न दाम्भिको नानृतवादी । न यतेः किंचित्कर्तव्यमस्ति । अस्ति चेत्सांकर्यम् । तस्मान्मननादौ संन्यासिनामधिकारः ।

आतुरकुटीचकयोर्भूर्लोकभुवर्लोकौ, बहूदकस्य स्वर्गलोको, हंसस्य तपोलोकः, परमहंसस्य सत्यलो-

---

1 करपात्रफलाहारो Tb फलाहरो d2-3, फलाहार॰ M

3 यतिर्नैकत्र वसेत् *ex conj*, यतिर्नैकरात्रीर्वसेत् M, यतिर्नैकरात्रिवसेत् NR, यतिर्नैकरात्र वसेत् others

4—5 ज्येष्टे नतिः स्वरूपज्ञे ज्येष्ठोऽपि कनिष्ठः M, ज्येष्ठयोः न स्वरूपज्ञः etc, T1 (for ज्येष्ठः । यो न स्वरूपज्ञः etc)

5 ऽपि न कनिष्ठहस्ताभ्यां d1

6 वृक्षमारोहयेन्न NR यानाद्धि॰ d1, यान्नाम्नि॰ d2-3

7 विनियमपरो NR

7—8 नान्यतरयते॰ for नानृतवादी न यतेः M

काले प्रशस्तवर्णानां भिक्षार्थं पर्यटेद्गृहान् ॥

पाणिपात्रश्चरन्योगी नासकृद्भैक्षमाचरेत् ।

तिष्ठन्भुञ्ज्याच्चरन्भुञ्ज्यान्मध्ये नाचमनं तथा ॥

अब्धिवद्धृतमर्यादा भवन्ति विशदाशयाः ।

नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ॥

आस्येन तु यदाहारं गोवन्मृगयते मुनिः ।

तदा समः स्यात्सर्वेषु सोऽमृतत्वाय कल्पते ॥

अनिन्द्यं वै व्रजन्गेहं निन्द्यं गेहं तु वर्जयेत् ।

अनावृते विशेद्द्वारि गेहे नैवावृते व्रजेत् ॥

पांसुना च प्रतिच्छन्नः शून्यागारप्रतिश्रयः ।

वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥

यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ।

---

1 काल॰ d1-3; Ta-1   प्रशस्ते d3, B

2. ॰पात्रं च Ta.   नासकृभैक्षम् NR

3. भुंजाच्चरन् (॰o) NR.   भुंजान्मध्य d1-3

4 अब्धीव धृत॰ NR, M

5. नियती d2; नियतीं d1-3.

10. प्रतिच्छन्नशून्या॰ M, B; प्रतिन्छिन्नशून्या॰ NR.   शून्यागारः प्रतिश्रयः NR.

यथालब्धोपजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥
निष्क्रम्य वनमास्थाय ज्ञानयज्ञो जितेन्द्रियः ।
कालकाङ्क्षी चरन्नेव ब्रह्मभूयाय कल्पते ॥
अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः ।
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥
निर्मानश्चानहङ्कारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नानृतं भाषते गिरा ॥
पुण्यायतनचारी च भूतानामविहिंसकः ।
काले प्राप्ते भजेद्भैक्षं कल्पते ब्रह्मभूयसे ॥
वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् ।
अज्ञातचर्यां लिप्सेत न चैनं हर्ष आविशेत् ।
अध्वा सूर्येण निर्दिष्टः कीटवद्विचरेन्महीम् ॥
आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ।

---

8. कालाकाङ्क्षी NR. चरेन्नेव NR.

9. भजेद्भैक्षं *er conj.*; भवेद्भैक्ष्यं d1; भवेद्भैक्षं others. कल्पते Tb only; others कल्प्यते. ब्रह्मभूयके Ga, M.

11. अज्ञातचर्यै NR लिप्येत NR; लिप्स्येत Ga; विप्येत M.

12. सूर्येऽपि variant of Tb. निर्दिष्टा NR; निर्दिष्ट T1, g.

लोकसंग्रहयुक्तानि नैव कुर्यान्न कारयेत् ॥
नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ।
अतिवादांस्त्यजेत्तर्कान्पक्षं कंचन नाश्रयेत् ॥
न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् ॥
अव्यक्तलिङ्गोऽव्यक्तार्थो मुनिरुन्मत्तबालवत् ।
कविर्मूकवदात्मानं तद्दृष्ट्या दर्शयेन्नृणाम् ॥
न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥
एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ।
आत्मक्रीड आत्मरतिरात्मवान्समदर्शनः ॥
बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ।
वदेदुन्मदवद्विद्वान्गोचर्या नैगमश्चरेत् ॥

2 सज्यते dl
7 त दृष्ट्या dl-4, तद्दृष्ट्वा G1, M
9 गूढवत् fo1 जडवत् Ib
11 आत्मक्रीडा AR
12 बुद्धो G1 क्रीड॰ G1, g, H M
13 नैमम (?) g नैगव (?) dl

क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽपि वा ।
ताडितः संनिरुद्धो वा वृत्त्या वा परिहापितः ॥
विष्ठितो मूत्रितो वाज्ञैर्बहुधैवं प्रकम्पितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत् ॥
संमाननं परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिं च विन्दति ॥
तथा चरेत वै योगी सतां धर्ममदूषयन् ।
जना यथावमन्येरन्गच्छेयुर्नैव संगतिम् ॥
जरायुजाण्डजादीनां वाङ्मनःकायकर्मभिः ।
युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ॥
कामक्रोधौ तथा दर्पलोभमोहादयश्च ये ।

1. प्रलुब्धो NR, Ta.
2. परितापितः Ga, M, परिवापितः T1.
3. निष्ठितो Ta-b-1, g    न कम्पितः d1.
4 श्रेयःकामः NR.    आत्मन्यात्मनम् (!) NR.
5. योगार्थे NR.
6. न विन्दति Ta.
7. धर्म न दूषयन NR, M.
9. जरायुं चांड° M.
10 युक्तं M.
11. दर्प d1.

तांस्तु दोपान्परित्यज्य परिव्राड् भयवर्जितः ॥
भैक्षाशनं च मौनित्वं तपो ध्यानं विशेपतः ।
सम्यग्ज्ञानं च वैराग्यं धर्मोऽयं भिक्षुके मतः ॥
काषायवासाः सततं ध्यानयोगपरायणः ।
ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा ।
भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेत्कचित् ॥
चित्तशुद्धिर्भवेद्यावत्तावन्नित्यं चरेत्सुधीः ।
ततः प्रव्रज्य शुद्धात्मा संचरेद्यत्र कुत्रचित् ॥
वहिरन्तश्च सर्वत्र संपश्यन्हि जनार्दनम् ।
सर्वत्र विचरेन्मौनी वायुवद्वीतकल्मपः ॥
समदुःखसुखः क्षान्तो हस्तप्राप्तं च भक्षयन् ।
निर्वैरेण समं पश्यन्द्विजगोश्वमृगादिपु ॥

---

2 मौनत्वं NR, M

3 भिक्षुको d1-3

5 वने देवा॰ Tb

7 तात्रयोगं for तावन्नित्यं Ga

10 विचरन् NR.

11. भक्षयन् Ta-b-1, Ga, M, others भक्षयेत्.

भावयन्मनसा विष्णुं परमात्मानमीश्वरम् ।
चिन्मयं परमानन्दं ब्रह्मैवाहमिति स्मरन् ॥

ज्ञात्वैवं मनोदण्डं धृत्वा आशानिवृत्तो भूत्वा आशाम्बरधरो भूत्वा सर्वदा मनोवाक्कायकर्मभिः सर्वसंसारमुत्सृज्य प्रपञ्चावाङ्मुखः स्वरूपानुसंधानेन भ्रमरकीटन्यायेन मुक्तो भवतीत्युपनिषत् ॥

पञ्चमोपदेशः ॥

अथ नारदः पितामहमुवाच । भगवन्तदभ्यासवशाद्भ्रमरकीटन्यायवत् । तदभ्यासः कथमिति । तमाह पितामहः । सत्यवाग्ज्ञानवैराग्याभ्यां विशिष्टदेहावशिष्टो वसेत् । ज्ञानं शरीरं, वैराग्यं जीवनं विद्धि, शान्तिदान्ती नेत्रे, मनो मुखं, बुद्धिः कला, पञ्चविंशतितत्त्वान्यवयवा, अव-

---

2. चिन्तय d3.

3. ज्ञात्वैवममनो° Ga; ज्ञात्वैवं स मनो° M.

4. आशाम्बरो धरो NR.

9. °कीटन्यायेन तदभ्यासः T1.

13—1 (p. १८८). °न्यवयवान्यवस्था° Tb-1, M, Go, NR.

स्थाः पञ्चमहाभूतानि, कर्मभक्तिज्ञानवैराग्यशाखा जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाः, चतुर्दशकरणानि पङ्क-स्तम्भाकाराणीत्येवमपि नावमपि पङ्के कर्णधार इव, यन्तेव गजं, स्वबुद्ध्या स्ववशीकृत्य, स्वव्यतिरिक्तं सर्वं कृतकं नश्वरमिति मत्वा, विरक्तः पुरुषः सर्वदा ब्रह्माहमिति व्यवहरेन्नान्यत्किंचिद्वेदितव्यं स्वव्यति-रेकेण जीवन्मुक्तो वसेत्कृतकृत्यो भवति। न नाहं ब्रह्मेति व्यवहरेत्किंतु ब्रह्माहमस्मीत्यजस्रं जाग्रत्स्वप्न-

---

अवस्था G1 only, अवम्था others

1 °भक्तिज्ञान° NR  For वैराग्यशाखा M, G1 have °वै-राग्यानि, Gc has वैराग्या, and g °वराग्या

2 तुरीयावस्था NR M, तुरीया others

2—3 पञ्चस्तम्भा° NR

3 नावमपि missing in G1  पङ्के [illegible] only, सपङ्क M, पङ्कं others save G1, nothing G1  G1 adds नाव after इव

4 °कृत्य स्वव्य° B only, °कृत्यास्वव्य° NR °कृत्यासव्य° SR save B

6 व्याहरेन्ना° M, व्यवहरन्ना° 11, व्यवहारे ना NR  स्मव्य° for स्वव्य° d2-3

7 न omitted in d1, not here in d2 3

8 ब्रह्मेति न व्यवहारे d2 3

सुषुप्तिषु तुरीयावस्थां प्राप्य तुरीयातीतत्वं व्रजेत् ।
दिवं जाग्रन्नक्तं स्वप्नं सुषुप्तमर्धरात्रगतमिति । एका-
वस्थायां चतस्रोऽवस्थास्तु । एकैककरणाधीनानां
चतुर्दशकरणानां व्यापाराश्चक्षुरादीनाम् । चक्षुषो
रूपग्रहणं श्रोत्रयोः शब्दग्रहणं जिह्वाया रसास्वा-
दनं घ्राणस्य गन्धग्रहणं वचसो वाग्व्यापारः
पाणेरादानं पादयोः संचारः पायोरुत्सर्ग उपस्थ-
स्यानन्दग्रहणं त्वचः स्पर्शग्रहणम् । तदधीना च
विषयग्रहणा बुद्धिः । बुद्ध्या बुध्यति । चित्तेन
चेतयति । अहंकारेणाहंकरोति । विसृज्य जीव
एतान्देहाभिमानेन जीवो भवति । गृहाभिमानेन

1 सुषुप्तितुरीया AR, G... all have तुर्य for तुरीय here as in all the following passages

2 दिवा B ... रात्र dII-2, Gix g

3 च तिस्रो for चतस्रो App ... ऽवस्थास्वेकैक AR Tri-I, g ... करणादीना dII-2

4 चक्षुषा AR

7 उत्सर्गो AR

11 एता d2, T1

गृहस्थ इव शरीरे जीवः संचरति । प्राग्दले पुण्यवृत्तिराग्नेय्यां निद्रालस्ये दक्षिणायां क्रौर्यबुद्धिर्नैर्ऋत्यां पापबुद्धिः पश्चिमे क्रीडारतिर्वायव्यां गमने बुद्धिरुत्तरे शान्तिरैशान्यां ज्ञानं कर्णिकायां वैराग्यं केसरेष्वात्मचिन्ता इत्येवं वक्त्रं ज्ञात्वा जीवदवस्थाः प्रथमं जाग्रद्द्वितीयं स्वप्नं तृतीयं सुषुप्तं चतुर्थं तुरीयं, चतुर्भिर्विरहितं तुरीयातीतं, विश्वतैजसप्राज्ञतटस्थभेदैरेक एव, एको देवः साक्षी निर्गुणश्च तद्ब्रह्माहमिति व्याहरेत् । नो चेज्जाग्रदवस्थायां जाग्रदादिचतस्रोऽवस्थाः स्वप्ने स्वप्नादिचतस्रोऽवस्थाः सुषुप्ते सुषुप्त्यादिचतस्रोऽवस्थाः तुरीये

1 गृहस्थैव d2-3; गृहस्थ इदं Tb

1—2 पुण्यावृत्तिः M; पुण्ये वृत्तिः Gc

2 °स्ये Ga, M, °स्यो NR, °स्यौ B, °स्या Gc  क्रौर्यवु° NR.

3 क्रीडाबुद्धिर्वा° Ga  गमन° Ga

4 ऐशान्यां *cr. conj*; ईशान्ये all

5 चक्रं for वक्त्रं Tb  जीवावस्था Tb  °स्थाः *cr. conj*; °स्थां Ta, B, °स्था others

6. प्रथमा Gc.  No जाग्रत् Ga

11. सुषुप्तौ Ta, Ga  No तुरीये in NR.

तुरीयादिचतस्रोऽवस्थाः । न त्वेवं तुरीयातीतस्य निर्गुणस्य । स्थूलसूक्ष्मकारणतुर्यरूपैर्विश्वतैजसप्राज्ञेश्वरैः सर्वावस्थासु साक्षी त्वेक एवावतिष्ठते । उत्तटस्थो न द्रष्टा । अदृष्टत्वान्न द्रष्टैव । कर्तृत्वभोक्तृत्वाहंकारादिभिः स्पृष्टो जीवः । जीवेतरो न स्पृष्टः । जीवोऽपि न स्पृष्ट इति चेन्न । जीवाभिमानेन क्षेत्राभिमानः, शरीराभिमानेन जीवत्वं । जीवत्वं घटाकाशमहाकाशवद्व्यवधानेऽस्ति । व्यवधानवशादेव हंसः सोऽहमिति मन्त्रेणोच्छ्वासनिःश्वासव्यपदेशेनानुसंधानं करोति । एवं विज्ञाय शरीराभिमानं

1 तुरीयादिचतस्रोऽवस्था missing in d1

2 °कारणतुर्यरूपै G1 only कारणरूपै others

3 एव तिष्ठते NR, 1b

3—4 उत्तटस्थो न द्रष्टा । अदृष्टत्वान्न द्रष्टैव । App, so G1, g, but दृष्ट° for अदृष्ट°, उत्तटस्थो द्रष्टा तटस्थो न द्रष्टा द्रष्टृत्वान्न द्रष्टैव Gc, others उत तटस्थो (तद्वस्थो T1) द्रष्टा तटस्थो न द्रष्टा द्रष्टृत्वान्न द्रष्टैव (दृष्टैव Gc)

6 °माने क्षेत्रा° d1

7 जीवत्वात् for जीवत्व' G1

8 °धानोऽस्ति NR, T a-1, g, °धानमस्ति G1, M °वशादेव d1

त्यजेन्न शरीराभिमानी भवति स एव ब्रह्मे-
त्युच्यते ।

त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ।
पिधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् ॥
शून्येष्वेवावकाशेषु गुहासु च वनेषु च ।
नित्ययुक्तः सदा योगी ध्यानं सम्यगुपक्रमेत् ॥
आतिथ्यश्राद्धयज्ञेषु देवयात्रोत्सवेषु च ।
महाजनेषु सिद्ध्यर्थी न गच्छेद्योगवित्क्वचित् ॥
यथैनमवमन्यन्ते जनाः परिभवन्ति च ।
तथा युक्तश्चरेद्योगी सतां वर्त्म न दूषयेत् ॥
वाग्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः ।
यस्यैते नियता दण्डाः स त्रिदण्डी महायतिः ॥
विधूमे च प्रशान्तेऽग्नौ यस्तु माधूकरीं चरेत् ।
गृहे च विप्रमुख्यानां यतिः सर्वोत्तमः स्मृतः ॥

---

7 आतीथ्य NR

8 सिद्ध्यर्थं dI

13 प्रशान्तेऽग्नौ NR, M, others प्रशान्ताग्नौ       माधूकरं Ta

दण्डभिक्षां च यः कुर्यात्स्वधर्मे व्यसनं विना ।
यस्तिष्ठति न वैराग्यं याति नीचयतिर्हि सः ॥
यस्मिन्गृहे विशेषेण लभेद्भिक्षां च वासनात् ।
तत्र नो याति यो भूयः स यतिर्नेतरः स्मृतः ॥
यः शरीरेन्द्रियादिभ्यो विहीनं सर्वसाक्षिणम् ।
पारमार्थिकविज्ञानं सुखात्मानं स्वयंप्रभम् ।
परतत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् ॥
वर्णाश्रमादयो देहे मायया परिकल्पिताः ।
नात्मनो बोधरूपस्य मम ते सन्ति सर्वदा ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् ।
स वर्णानाश्रमान्सर्वानतीत्य स्वात्मनि स्थितः ॥
योऽतीत्य स्वाश्रमान्वर्णानात्मन्येव स्थितः पुमान् ।

---

1 दण्डं भिक्षा M.     स्वधर्मव्यसनं NR.
4. यो Ga, g, others नो.
7. सोऽतिसर्वाश्रमी M.
8 देहमायया Tb.
11 स्वात्मवेदनात् Ga
13 स्वाश्र॰ Tb only ; others स्वाश्र॰.     सर्वान् for वर्णान् M.

सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदार्थवेदिभिः ॥
तस्मादन्यगता वर्णा आश्रमा अपि नारद ।
आत्मन्यारोपिताः सर्वे भ्रान्त्या ते नात्मवेदिना ॥
न विधिर्न निषेधश्च न वर्ज्यावर्ज्यकल्पना ।
ब्रह्मविज्ञानिनामस्ति तथा नान्यच्च नारद ॥
विरज्य सर्वभूतेभ्य आविरिश्चपदादपि ।
घृणां विपाट्य सर्वस्मिन्पुत्रमित्रादिकेष्वपि ॥
श्रद्धालुर्मुक्तिमार्गेषु वेदान्तज्ञानलिप्सया ।
उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ॥
सेवाभिः परितोष्यैनं चिरकालं समाहितः ।
सदा वेदान्तवाक्यार्थं श‍ृणुयात्सुसमाहितः ॥
निर्ममो निरहंकारः सर्वसङ्गविवर्जितः ।
सदा शान्त्यादियुक्तः सन्नात्मन्यात्मानमीक्षते ॥

---

2 नाश्रमा Th
3 °वेदिनः g, App
4 वर्ज्यावर्ज्य° NR
6 आविरिंचि° NR
8 °ज्ञानविल्स्यम् Th
10 चिरकालसमाहितः Ta

संसारदोपदृष्ट्यैव विरक्तिर्जायते सदा ।
विरक्तस्य तु संसारात्संन्यासः स्यान्न संशयः ॥
मुमुक्षुः परहंसाख्यः साक्षान्मोक्षैकसाधनम् ।
अभ्यसेद्ब्रह्मविज्ञानं वेदान्तश्रवणादिना ॥
ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ।
शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत् ॥
वेदान्ताभ्यासनिरतः शान्तो दान्तो जितेन्द्रियः ।
निर्भयो निर्ममो नित्यं निर्द्वन्द्वो निष्परिग्रहः ॥
जीर्णकौपीनवासाः स्यान्मुण्डी नग्नोऽथवा भवेत् ।
प्राज्ञो वेदान्तविद्योगी निर्ममो निरहंकृतिः ॥
मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु ।
एको ज्ञानी प्रशान्तात्मा स संतरति नेतरः ॥
गुरूणां च हिते युक्तस्तत्र संवत्सरं वसेत् ।

---

1. °दोषं दृष्ट्वैव M; °दोषदृष्टैव NR.
3. °साधनः Ta.
4. अभ्यासे ब्रह्म° NR.
5. परहंससमाहितः dI.
8. नित्यं Ga only; others नित्यो.

नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥
प्राप्य चान्ते ततश्चैव ज्ञानयोगमनुत्तमम् ।
अविरोधेन धर्मस्य संचरेत्पृथिवीमिमाम् ॥
ततः संवत्सरस्यान्ते ज्ञानयोगमनुत्तमम् ।
आश्रमत्रयमुत्सृज्य प्राप्तश्च परमाश्रमम् ॥
अनुज्ञाप्य गुरुंश्चैव चरेद्धि पृथिवीमिमाम् ।
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ॥
द्वाविमौ न विराजेते विपरीतेन कर्मणा ।
निरारम्भो गृहस्थश्च कार्यवांश्चैव भिक्षुकः ॥
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति ।
तस्माद्दृष्टिविषां नारीं दूरतः परिवर्जयेत् ॥
संभाषणं सह स्त्रीभिरालापं प्रेक्षणं तथा ।

2 प्राप्य चान्तेषु तत्वैव NR

3 सचरन् M, text of Ib, सचर d2 3 करोति for संचरेत् T c1, Gu, g, App, सकरोति variant of Ib

6 प्राप्यश्च (so) d1-2

8 विरज्येते B

12 आलाप प्रेक्षण M only, आलापप्रेक्षण NR, I1, g, आलाप प्रेक्षण others

नृत्तं गानं सहासं च परिवादांश्च वर्जयेत् ॥
न स्नानं न जपः पूजा न होमो नैव साधनम् ।
नाग्निकार्यादिकार्यं च नैतस्यास्तीह नारद ॥
नार्चनं पितृकार्यं च तीर्थयात्रा व्रतानि च ।
धर्माधर्मादिकं नास्ति न विधिर्लौकिकक्रिया ॥
संत्यजेत्सर्वकर्माणि लोकाचारं च सर्वशः ।
कृमिकीटपतङ्गांश्च तथा योगी वनस्पतीन् ॥
न नाशयेद्बुधो जीवान्परमार्थमतिर्यतिः ।
नित्यमन्तर्मुखः स्वच्छः प्रशान्तात्मा स्वपूर्णधीः ॥
अन्तःसङ्गपरित्यागी लोके विहर नारद ।
नाराजके जनपदे चरत्येकचरो मुनिः ॥
निःस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च ।

---

1. नृत्यं NR. सहासं SR save M, साहसं NR, M
2. Padd होमो नैव च साधनं Ga, g.
5. चास्ति Ga, g. लौकिकी M, B.
6. लोकाकारं NR.
7. °पतङ्गाश्च NR.
9. स्वस्थः d1.
11. °चरान्मुनिः d1.

चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥

इत्युपनिषत् ॥

## षष्ठोपदेशः ॥

अथ यतेर्नियमः कथमिति पृष्टवन्तं नारदं पितामह उवाच पुरस्कृत्य । विरक्तः संन्यस्य वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी चरेन्नैकत्र निवसेद्भिक्षुर्भयात्सारङ्गवदेकत्र न तिष्ठेत्स्वगमननिरोध-

---

4 Beginning of d4 D5 8 हरि ॐ । सह नाववतु । ॐ शान्ति शान्ति शान्ति । अथ यतिनियम कथमिति etc , of d5 अथ खिलसहितोपनिषद्रहस्यपरिव्राजकोपनिषत्प्रारभ । हरि ॐ । अथ यतेर्नियम कथमिति etc After कथमिति d4, D5 8 insert पितामह पुरस्कृत्य पृष्टवन्त PU , पृष्टो M , पृष्ट others , D5 adds स

5 उवाच PU only missing elsewhere

5–6 पुरस्कृत्य——ऽष्टौ not some texts पुरस्कृत्य विरक्त सन्यो (सन्यस्तो G1 सन्यासी M , सन्यासा g) वर्षासु ध्रुव (दृढ 1b) शीलो ऽष्टा all exc PU परमहस सत्यविरक्त सन्यस्य नियम सन्वर्षा ऋतुषु ध्रुवासीनोष्टौ d4, D5 8, परमहस सत्य विरक्त सन्यस्य वर्षा ऋतुसु ध्रुवासीनोष्टौ d5

6 मासानेकाकी error , मासस्वेकाकी M , मास्यैकाकी D5, मास्येकाकी others चरेन्नैकत्र Ga only चरन्नेकत्र B , चरेन्नैकरात्र M, चरन्नैकत्र others

7 भयादिना for भयात् d5 भयादीना (o) d4 d5 8 सारङ्गवद्येकत्र d4, D5 8, वदेतत्र ( ) d5 स्वागमनविरोध° Gc

ग्रहणं न कुर्याद्धस्ताभ्यां नद्युत्तरणं न कुर्यान्न वृक्षारोहणमपि न देवोत्सवदर्शनं कुर्यान्न वा गृहे निवसेन्नाग्निसेवां कुर्यान्न सर्वत्र संचरेन्न देवताप्रसादग्रहणं कुर्यान्नैकत्राश्नीयान्न वाह्यदेवार्चनं कुर्यात्स्वव्यतिरिक्तं सर्वं त्यक्त्वा मधुकरवृत्त्याहारमाहरन्कृशो भूत्वा मेदोवृद्धिमकुर्वन्नाज्यं रुधिरमिव त्यजेदेकत्रान्नं पललमिव गन्धलेपनमशुद्धलेपनमिव

1 च for न g न हस्ताभ्यां नद्युत्तरणं कुर्यात् PU

2 वृक्षारोह NR, वृक्षमारोह NR save PU, यानावरोह° PU PU adds अपि after दर्शनं

2—4 न वा गृहे—— प्रसादग्रहणं कुर्यात् PU only, missing in others

2—3 स्वगृहे for वा गृहे d5

3 कुर्यात्सर्वत्र d5

4 °प्रसादग्रहं d4-8. कुर्यात् d5 only, missing in others नैकत्राश्नीयात् d4-5 only, नैकरात्राशी M, नैकत्राशी others °देवतार्चनं NR, M, Ga

5—3 (p. २०१) सर्वं——चौरवत् omitted in d5

6 कुर्वन् I आज्यं d4, D8, Ga

7 एकान्नं PU save D5; एकरात्रान्नं M. पलालमिव d1, D8, g. °शुद्धि° T1, B. After °लेपनमिव PU (save D5) inserts : कक्षादिवपनं त्यजेत्

क्षारमन्त्यजमिव वस्त्रमुच्छिष्टपात्रमिवाभ्यङ्गं स्त्रीसङ्गमिवोष्णोदकं मूत्रमिव स्पृहां गोमांसमिव ज्ञातचरदेशं चण्डालवाटिकामिव स्त्रियमहिमिव सुवर्णं कालकूटमिव सभास्थलं श्मशानस्थलमिव राजधानीं कुम्भीपाकमिव शवपिण्डवदेकत्रान्नम् । देहान्तरदर्शनां प्रपञ्चवृत्तिं परित्यज्य स्वदेशमुत्सृज्य ज्ञातचरदेशं विहाय विस्मृतपदार्थपुनःप्राप्तिहर्ष इव

---

1 तैलाभ्यग for अभ्यङ्ग NR save d5, D8

2 उष्णोदक d4 5, D8 मित्राह्लोदक (so) d2 3, मिष्टाहारोदक (so) d1 मित्राल्हादक others स्पृहा Ia-1, स्पृह (so) d1-2 3, तनुस्पर्शन PC save D5 मलमिव for गोमांसमिव d5, मलिनमिव d4, मलीमिव D8

3 चाण्डाल d2-4-5 D8 In M सुवर्णं *precedes* स्त्रियम॰ स्त्रीम् d5, स्त्री d1 8

4 कालकुटमिव d2 3, D8

4—5 राजधानी d4 5, D8

5 ॰पिण्डमिवैकत्रान्नं d1 5, D8 ॰एकत्रान्न M न inserted before देह in all but d1 5, D8 देव for देह d4-5, D8 M देश G1

6 ॰दर्शना *a e m* , ॰दर्शन all

7 विस्मृत्य M पदार्थं *a e m* , पदार्धं g , पदार्थं others

स्वमानन्दमनुस्मरन्स्वशरीराभिमानदेशविस्मरणं कृ-
त्वा स्वशरीरं शवमिव हेयमुपगम्य कारागृहविनि-
र्मुक्तचोरवत्पुत्राप्तबन्धुभवस्थलं विहाय दूरतो वसेत्।
अयत्नेन प्राप्तमाहरन्ब्रह्मप्रणवध्यानानुसंधानपरो भू-
त्वा सर्वकर्मनिर्मुक्तः कामक्रोधलोभमोहमदमात्सर्या-
दिकं दग्ध्वा त्रिगुणातीतः षडूर्मिरहितः षड्भाववि-
कारशून्यः सत्यवाक्शुचिरद्रोही ग्रामैकरात्रं पत्तने
त्रिरात्रं नगरे पञ्चरात्रं क्षेत्रे षड्रात्रं तीर्थे सप्त-

°प्राप्तहर्षं इव Ga, g, M, °प्राप्तहर्षमिव d4, °प्रार्थहर्षमिव d5, °प्राप्तं हर्ष-मिव D8

1 स्वरूपानुसंधानं स्मरन् for स्वमानन्दमनुस्मरन् d4-5, D8 °भिमानमिव विस्मरणं d4-5, D8

1—2 कृत्वा d4-5, D8, others मत्वा

3 पुत्राप्तभवबन्धु° for पुत्राप्तबन्धुभव° Ga, पुत्राप्तबन्धुभुवन° Ta

4 यत्नेन for अयत्नेन Tb, g  प्राप्तमाहाराहरन् d4, D5-8, प्राप्तमाहारमाहरन् d5  No ध्यान in PU

5 वासनैषणा for सर्वकर्म PU.  °कर्ममुक्त° Ga, g, °कर्मवि-निर्मुक्तः PU, M, no Visarga in d1-2-3

5—6 °मात्सर्यादीन् PU.

6 No त्रि in d4, D5-8  7. पट्टने PU.

8 त्रिरात्रं नगरे omitted in all but PU.  षड्रात्रं PU,

क्षारमन्त्यजमिव वस्त्रमुच्छिष्टपात्रमिवाभ्यङ्गं स्त्री-
सङ्गमिवोष्णोदकं मूत्रमिव स्पृहां गोमांसमिव ज्ञात-
चरदेशं चण्डालवाटिकामिव स्त्रियमहिमिव सुवर्णं
कालकूटमिव सभास्थलं श्मशानस्थलमिव राज-
धानीं कुम्भीपाकमिव शवपिण्डवदेकत्रान्नम् । दे-
हान्तरदर्शनां प्रपञ्चवृत्तिं परित्यज्य स्वदेशमुत्सृज्य
ज्ञातचरदेशं विहाय विस्मृतपदार्थपुनःप्राप्तिहर्ष इव

---

1 तैलाभ्यग for अभ्यङ्गं NR save d5, D8

2 उष्णोदक d4-5, D8 मित्राहोंदक (so) d2-3, मिष्टाहारोदक (so) d1, मित्राल्हादकं others स्पृहा Pa-1, स्पृह (so) d1-2-3, तनुस्पर्शन PL save D5 मलमिव for गोमासमिव d5, मलिन-मिव d4, मलीमिव D8

3 चाण्डाल° d2-4-5 D8 In M सुवर्णं *precedes* स्त्रियम° स्त्रीम् d5, स्त्री d1 8

4 कालकुटमिव d2 3, D8

4—5 राजधानी d4 5, D8

5 °पिण्डमिवैकत्रान्न d4-5, D8 एकत्रान्न M न inserted before देह in all but d4-5, D8 देव for देह d4-5, D8, M, देश G1

6 °दर्शना *ex conj*, °दर्शनं all

7 विस्मृत्य M पदार्थ *ex conj*, पदार्थं g, पदार्थं others

स्वमानन्दमनुस्मरन्स्वशरीराभिमानदेशविस्मरणं कृ-
त्वा स्वशरीरं शवमिव हेयमुपगम्य कारागृहविनि-
र्मुक्तचोरवत्पुत्राप्तबन्धुभवस्थलं विहाय दूरतो वसेत्।
अयत्नेन प्राप्तमाहरन्ब्रह्मप्रणवध्यानानुसंधानपरो भू-
त्वा सर्वकर्मनिर्मुक्तः कामक्रोधलोभमोहमदमात्सर्या-
दिकं दग्ध्वा त्रिगुणातीतः षडूर्मिरहितः षड्भाववि-
कारशून्यः सत्यवाक्शुचिरद्रोही ग्रामैकरात्रं पत्तने
त्रिरात्रं नगरे पञ्चरात्रं क्षेत्रे षड्रात्रं तीर्थे सप्त-

°प्राप्तहर्ष इव Ga, g, M; °प्राप्तहर्षमिव d4; °प्रार्थहर्षमिव d5; °प्राप्तं हर्ष-मिव D8.

1. स्वरूपानुसंधानं स्मरन् for स्वमानन्दमनुस्मरन् d4-5, D8. °भिमानमिव विस्मरणं d4-5, D8.

1—2. कृत्वा d4-5, D8; others मत्वा.

3. पुत्राप्तभवबन्धु° for पुत्राप्तबन्धुभव° Ga; पुत्राप्तबन्धुभुवन° Ta.

4. यत्नेन for अयत्नेन Tb, g. प्राप्तमाहाराहरन् d4, D5-8; प्राप्तमाहारमाहरन् d5. No ध्यान in PU.

5. वासनैषणा for सर्वकर्म PU. °कर्ममुक्तः Ga, g; °कर्मवि-निर्मुक्तः PU, M; no Visarga in d1-2-3.

5—6. °मात्सर्यादीन् PU.

6. No त्रि in d4, D5-8. 7. पट्टने PU.

8. त्रिरात्रं नगरे omitted in all but PU. षड्रात्रं PU;

रात्रमनिकेतः स्थिरमतिर्नानृतवादी गिरिकन्दरेषु वसेदेक एव चरेद्वाभ्यां ग्रामस्त्रिभिः पत्तनं चतुर्भिर्नगरमित्येक एव चरेद्भिक्षुश्चतुर्दशकरणानां न तत्रावकाशं दद्यादविच्छिन्नज्ञानाद्वैराग्यसंपत्तिमनुभूय मत्तो न कश्चिदन्यो व्यतिरिक्त इत्यात्मन्यालोच्य सर्वतः स्वरूपमेव पश्यञ्जीवन्मुक्तिमवाप्य प्रारब्ध-

---

others पञ्चरात्र    सप्त° PU others again पञ्च°

1 निकेतस्थिर° PU Ta g, M    स्थिरमतिर्नात्र गीतवादी d4, D8 स्थिरमति । गगातीरे वसेन्नित्य यतिर्मोक्षपरायण । नात्र गीतवादी D₁

2 वनेष्वेक एव for वसेदेक एव d₁, वनेष्वेव एक एव d4 D8, वनेष्वेव एकरात्र D₁    चरेद् missing in all save PU

ग्राम Ga, g, ग्राम others

2—3 द्वाभ्या——भिक्षु PU (save ग्राम), others have द्वौ वा [न M] चरेत् [मिथुन द्वाभ्या Ga] ग्राम (ग्राम Ga, g) त्रिभिर्नगर (त्रिर्नगर Ga) चतुर्भिर्ग्राम (चतुर्ग्राम 1, 1, g, Gc, M) मित्येकश्चरेद्भिक्षु (चरेत् । भिक्षु B)

4 नकत्रावकाश for तत्रावकाश PU    दद्यान्न वि° d1 अवन्छिन्न° Gc, Tb    °न्न ज्ञान वै° d4 D₁ 8    सपदमनुभूय PU

5 कश्चिदन्यो M only, others कश्चिन्नान्यो    अन्योऽतिरिक्त M

6 सर्वत्र for सर्वत PU

प्रतिभासनाशपर्यन्तं चतुर्विधं स्वरूपं ज्ञात्वा देहपतनपर्यन्तं स्वरूपानुसंधानेन वसेत् ।

त्रिषवणस्नानं कुटीचकस्य, बहूदकस्य द्विवारं, हंसस्यैकवारं, परमहंसस्य मानसस्नानं, तुरीयातीतस्य भस्मस्नानमवधूतस्य वायव्यस्नानम् । ऊर्ध्वपुण्ड्रं कुटीचकस्य, त्रिपुण्ड्रं बहूदकस्य, ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं हंसस्य, भस्मोद्धूलनं परमहंसस्य, तुरीयातीतस्य तिलकपुण्ड्रम्, अवधूतस्य न किंचित् । ऋतुक्षौरं कुटीचकस्य, ऋतुद्वयक्षौरं बहूदकस्य,

1 भाष for भास D5, भान Tb, Ga, भाव g   चतुर्विधस्वरूपं PU, Gc   देहे d2-3

3 त्रिषवण स्नान PU

4 मानसिकस्नानं d1-2-3 M   तुर्या° PU (also in fll in d4-5), Ga

6 बहूदकस्य त्रिपुण्ड्र PU (inverting text)

6—7 त्रिपुण्ड्रमूर्ध्वपुण्ड्रं हसस्य for ऊर्ध्वपुण्ड्रं etc, d5, ऊर्ध्वपुण्ड्रं हंसस्य d1-4, D8, हंसस्याप्यूर्ध्वपुण्ड्रं D5

8 PU inserts न before तिल°   तिलकमपुण्ड्रं d1-2, तिलक पुण्ड्रं d3, तिलक एकपुण्ड्रं Ta   After किंचित् all but d5 and Ga insert तुरीयातीतावधूतयोः

9*. No ऋतुक्षौरं in d5

न क्षौरं हंसस्य, परमहंसस्य च न क्षौरम्, अस्ति चेदयनक्षौरं, तुरीयातीतावधूतयोर्न क्षौरम् । कुटीचकस्यैकान्नं, माधूकरं वहूदकस्य, हंसपरमहंसयोः करपात्रं, तुरीयातीतस्य गोमुखम्, अवधूतस्याजगरवृत्तिः । शाटीद्वयं कुटीचकस्य, वहूदकस्यैकशाटी, हंसस्य खण्डं, दिगम्बरं परमहंसस्यैककौपीनं वा, तुरीयातीतावधूतयोर्जातरूपधरत्वम् । हंसपरमहंसयोरजिनं न त्वन्येपाम् । कुटीचकवहूदकयोर्देवार्चनं, हंसपरमहंसयोर्मानसार्चनं,

---

9 (p २०३)—1 M omits वहूदकस्य न क्षौरं वहूदकस्य हस परमहसयोर्न क्षौर for वहूदकस्य——च न क्षौरम् PU

1 No च in d1, M न क्षौरम्' missing in d1 2 3

2 After अयनक्षौर d1 inserts न क्षौर

3 माधु° d4, Do 8, मधु° d1, Go, g, मधू° d2 3 o वहूदकस्य माधु(मधू)कर PU (inverting text)

5 शाठी d1 (also in fll)

6 खद्र D8 दिगम्बरस्य d2 3, Do

6—7 परमहंसस्य दिगम्बर d5 (inverting text)

8 हस ——त्वन्येपाम् *not in PU*

9—2 (p २०५) The whole passage *between* देवार्चन and मन्त्रजपाधिकारो is missing in PU

तुरीयातीतावधूतयोः सोऽहंभावना । कुटीचकवहूदकयोर्मन्त्रजपाधिकारो, हंसपरमहंसयोर्ध्यानाधिकारस्तुरीयातीतावधूतयोर्न त्वन्याधिकारस्तुरीयातीतावधूतयोर्महावाक्योपदेशाधिकारः परमहंसस्यापि । कुटीचकवहूदकहंसानां नान्योपदेशाधिकारः । कुटीचकवहूदकयोर्मानुपप्रणवो हंसपरमहंसयोरान्तरप्रणवस्तुरीयातीतावधूतयोर्ब्रह्मप्रणवः । कुटीचकवहूदकयोः श्रवणं, हंसपरमहंसयोर्मननं, तुरीयातीतावधूतयोर्निदिध्यासनम् । सर्वेषामात्मानुसंधानवि-

---

2. PU inserts देवार्चनं before मन्त्र°.

2—7. The whole passage *between* ध्यानाधिकारः and तुरीयातीतावधूतयोर्ब्रह्मप्रणवः is missing in D5.

3. Tb omits तुरीयातीतावधूतयोर्न त्वन्याधिकारः, Ga, M add किंतु after the same.

3—4. d4, D8 omit तुरीयातीतावधूतयोः².

4. °देश एवाधिकारः d4, D8.

4—5. d4, D8 omit कुटीचक°——°धिकारः.

6. मानसप्रणवो M; मानसः प्रणवो d5. अन्तः for आन्तर d4-5, D8.

9*. निदिध्यासः SR save M. °धानवि° M only; °धानं वि° others.

धिरिति ।

एवं मुमुक्षुः सर्वदा संसारतारकं तारकमनुस्मरञ्जीवन्मुक्तो वसेदधिकारविशेषेण कैवल्यप्राप्त्युपायमन्विष्येद्यतिरित्युपनिषत् ॥

सप्तमोपदेशः ॥

अथ हैनं भगवन्तं परमेष्ठिनं नारदः पप्रच्छ । संसारतारकं प्रणवं नो ब्रूहीति । तथेति परमेष्ठी वक्तुमुपचक्रमे ओमिति ब्रह्मेति व्यष्टिसमष्टिप्रकारेण । का व्यष्टिः का समष्टिः । संहारप्रणवः सृष्टि-

---

9 (p २०५)—1. °नुसंधानावधीति (so) d5

2. एवं d1-2-3-5, Gc, M, others एव  मुमुक्षोः PU. सदा for सर्वदा Ta

3—4. कैवल्यं ह्युपायमस्ति । इत्युपनिषत् ॥ d5, D8; कैवल्यप्राप्त्युपादानमस्ति । इत्युपनिषत् ॥ D5

4 °पादायमन्वि° (so) d1  अन्विछेद् d1-2-3.

5 Ending of d4. सह नाववतु° । ॐ शान्तिः ३ । इति परिव्राजकोपनिषत्समाप्तं ॥, so D5-8 (slightly different), d5: इति श्रीखिलसंहितोपनिषद्रहस्यपरिव्राजकोपनिषदिति समाप्तोपदेशः (!) ॥

7. °तारकः Ta  प्रणवं नो मूहीति Ga, g, प्रपन्नेन्नूहीति M; प्रपन्नो मूहीति NR, Ta-1; प्रसन्नो मूहीति others.

8. उपक्रमे Ta-b, Gc; उपक्रमते NR.

प्रणवश्चान्तर्बहिश्चोभयात्मकत्वात्त्रिविधः । ब्रह्मप्रणवोऽन्तःप्रणवो व्यावहारिकप्रणवः । बाह्यप्रणव आर्षप्रणव उभयात्मको विराट्प्रणवः । संहारप्रणवो ब्रह्मप्रणवोऽर्धमात्राप्रणवः । ओमिति ब्रह्म ।

ओमित्येकाक्षरमन्तःप्रणवं विद्धि । स चाष्टधा भिद्यते । अकारोकारो मकारोऽर्धमात्रा नादो विन्दुः कला शक्तिश्चेति । तत्र चत्वार, अकारश्चायुतावयवान्वित उकारः सहस्रावयवान्वितो मकारः शतावयवोपेतोऽर्धमात्राप्रणवोऽनन्तावयवाकरः ।

सगुणोत्पत्तिप्रणवः संहारो निर्गुणप्रणव उभ-

---

4 ऽर्धमात्राप्रणवः B only, ऽर्धमात्रप्रणवः others

5 °मन्त्र प्रणवं M

5—3 (p २०८) स चाष्टधा——विराट्प्रणवः missing in App., स चाष्टधा——षट्त्रिंशत्तत्त्वातीतः missing in Ga

6—7 अकारोकारो——शक्तिश्चेति *ex conj*; अकार उकारो मकार अर्धमात्रा नादबिन्दुकलाशक्तिश्चेति d1, M, अकारोकारमकारार्धमात्रानादबिन्दुकलाशक्तिश्चेति others

7. तत्र Ga, B, तन्त्र (तं न) others

9. मात्र for मात्रा Ta-1, g °वाकरः all save M which has °वाकारः

10—1 (p. २०८). सगुणो——°प्रणवः *ex conj.*, texts read.

यात्मको विराट्प्रणवः । यथा प्लुतो विराट् प्लुत-संहारः ।

विराट्प्रणवः षोडशमात्रात्मकः षट्त्रिंशत्तत्त्वातीतः । षोडशमात्रात्मकत्वं कथमित्युच्यते । अकारः प्रथमा, उकारो द्वितीया, मकारस्तृतीया, अर्धमात्रा चतुर्थी, नादः पञ्चमी, बिन्दुः षष्ठी, कला सप्तमी, कलातीताष्टमी, शान्तिर्नवमी, शान्त्यतीता दशमी, उन्मन्येकादशी, मनोन्मनी द्वादशी, पुरी त्रयोदशी, मध्यमा चतुर्दशी, पश्य-

---

सगुणो विराट्प्रणवः संहारो निर्गुणप्रणव उभयात्मकोत्पत्तिप्रणवो †

10 (p २०७)—3 उभयात्मको°——विराट्प्रणव. missing in g

1 °यात्मिको NR  स्रुतो for प्लुतो d2-3  प्लुत° d2 only, प्लुतप्लुत° d1-3, प्लुतप्लुत T1, M, प्लुत. प्लुत° others

3 षड्विंशत् Iः  4 षोडशमात्रात्मक. for °कत्व G१

4—6 अकार ——चतुर्थी *er conj*, texts read अकार. प्रथम उकारो द्वितीयो मकारस्तृतीय अर्धमात्रश्चतुर्थो (अर्धमात्रा चतुर्थी G१)

6 पञ्चमो G१  षष्ठः G१

8 उन्मन्यै° B

9* पुरीतती for पुरी Ga, M  तनुमध्यमा for मध्यमा M

न्ती पश्चदशी, परा षोडशी । पुनश्चतुःषष्टिमात्रः प्रकृतिपुरुषद्वैविध्यमासाद्याष्टाविंशत्युत्तरशतभेदमात्रास्वरूपमासाद्य सगुणनिर्गुणत्वमुपैत्येकोऽपि ब्रह्मप्रणवः ।

सर्वाधारः परं ज्योतिरेष सर्वेश्वरो विभुः ।
सर्वदेवमयः सर्वप्रपञ्चाधारगर्भितः ॥
सर्वाक्षरमयः कालः सर्वागममयः शिवः ।
सर्वश्रुत्युत्तमो मृग्यः सकलोपनिषन्मयः ॥
भूतं भव्यं भविष्यद्यत्त्रिकालोदितमव्ययम् ।
तदप्योंकारमेवायं विद्धि मोक्षप्रदायकम् ॥

---

9 (p २०८)—1 पती (so) for पश्यन्ती M

1 °मात्रः Ga only, °मात्र° Ta-1, °मात्रा others

2 शत in d1-3, Tb, M, App only

2—3 °मात्रास्वरूप° Ga

3 उपैत्येकोऽपि M only, उपेत्येकोऽपि NR, Tb, उपेत्यैकोऽपि others

5 सर्वाधारं T1, g    विभुः B only, others विद्नु.

8 सर्वश्रुत्युक्त ओ मृग्यः M, सर्वश्रुत्युक्तमो मृग्यः NR    °षण्मयः NR

9 भूतं भव्यं भविष्यद् B only, भूतभव्यभविष्यद् NR, Ta-b-1, Ga, M, भूतं भव्यभविष्यद् others

10 °रमेवाद्य M, °रमेवार्य Ga, g

तदेवात्मानमित्येतद्ब्रह्मशब्देन वर्णितम् ।
तदेकममृतमजरमनुभूय तथोमिति ॥
सशरीरं समारोप्य तन्मयत्वं तथोमिति ।
अशरीरं तमात्मानं परं ब्रह्म विनिश्चिनु ॥
परं ब्रह्मानुसंदध्याद्विश्वादीनां क्रमक्रमात् ।
स्थूलत्वात्स्थूलभुक्त्वाच्च सूक्ष्मत्वात्सूक्ष्मभोगतः ॥
ऐक्यादानन्दभोगाच्च, सोऽयमात्मा चतुर्विधः ।
चतुष्पाज्जागरितस्थः स्थूलप्रज्ञो हि विश्वभुक् ॥
एकोनविंशतिमुखः साष्टाङ्गः सर्वगः प्रभुः ।
स्थूलभुक्चतुरात्माथ विश्वो वैश्वानरः पुमान् ॥

---

1 तदेवात्मानमित्येतद् all (read तदेवात्मानं विद्ध्येतद् ?) वर्णनम् Ta

2 तदेतदमृत° Ga   अजरममृतम् for अमृतमजरम् Tb

4 अशरीरं G1, g, App , त्रिशरीरं others   समात्मानं MR, Ta-1, G1, App , स्वमात्मानं g, M

5 क्रमक्रमात् d2, Ga , others क्रम. क्रमात

6 सूक्ष्मभोगतः G1 only ; others सूक्ष्मभुक् परम्

7 ऐक्यादानन्द° G1 only , others ऐक्यत्वानन्द°

8 जागरितस्थः G1 only , जाग्रति स्थूलः G1 , जागरितः स्थूल° others

विश्वजित्प्रथमः पादः, स्वप्नस्थानगतः प्रभुः ।
सूक्ष्मप्रज्ञः स्वतोऽष्टाङ्ग एको नान्यः परन्तप ॥
सूक्ष्मभुक्चतुरात्माथ तैजसो भूतराडयम् ।
हिरण्यगर्भः स्थूलोऽन्तर्द्वितीयः पाद उच्यते ॥
कामं कामयते यावद्यत्र सुप्तो न कंचन ।
स्वप्नं पश्यति नैवात्र तत्सुषुप्तमपि स्फुटम् ॥
एकीभूतः सुषुप्तस्थः प्रज्ञानघनवान्सुखी ।
नित्यानन्दमयोऽप्यात्मा सर्वजीवान्तरस्थितः ॥
तथाप्यानन्दभुक्चेतोमुखः सर्वगतोऽव्ययः ।
चतुरात्मेश्वरः प्राज्ञस्तृतीयः पादसंज्ञितः ॥
एष सर्वेश्वरश्चैष सर्वज्ञः सूक्ष्मभावनः ।
एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ ॥

---

2. एको नान्यः परन्तप (!) does duty for एकोनविंशतिमुखः of Māṇḍ. Up. 4. The passage looks corrupted.

4. स्थूलान्तर्द्वितीयः Tb.

7. सुषुप्तिस्थः Ga.

10. पादः संज्ञिकः NR, Ta-1.

12. प्रभवाव्ययौ d2-3.

भूतानां, त्रयमप्येतत्सर्वोपरमबाधकम् ।
तत्सुषुप्तं हि तत्स्वप्नं मायामात्रं प्रकीर्तितम् ॥
चतुर्थश्चतुरात्मापि सच्चिदेकरसो ह्यजः ।
तुरीयावसितत्वाच्च एकैकस्यानुसारतः ॥
ओतानुज्ञात्रनुज्ञानाविकल्पज्ञानसाधनम् ।
विकल्पत्रयमत्रापि सुषुप्तं स्वप्नमान्तरम् ॥
मायामात्रं विदित्वैवं सच्चिदेकरसो ह्यजः ।
विभक्तो ह्ययमादेशो न स्थूलप्रज्ञमन्वहम् ॥
न सूक्ष्मप्रज्ञमत्यन्तं न प्रज्ञं न कचिन्मुने ।

---

1 तुर्यमप्ये° for त्रयमप्ये° Ga °साधक for °बाधक Tı, Ga, °बोधक Tb, °सिद्धिक T1

2 तत्स्वप्न NR, यत्स्वय SR

3 ह्यज Ga, प्ययम् T1, M, स्म्यहम् Tb, ह्ययम् others

4 एकैकस्यानु° *ed conj*, एकैकत्वानु° all

5 ज्ञातानु° for ओतानु° M, Bक, जितानु° Tb °ज्ञानावि° *ed conj*, °ज्ञात्वाद्वि° M, °ज्ञैकावि° Ga, °ज्ञात्रवि° Bक, °ज्ञातृवि° others

6 सपुप्तस्वप्न° Ta 1 स्वप्नमातरम् d1-3

7 ह्यज॰ Ga, ह्यथ d3, Tb, M, ह्यथा d1, T1, हर (so) Ta, ह्ययम् others

8 स्थूलप्रज्ञोमन्वहम् Tb

नैवाप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञमान्तरम् ॥

नाप्रज्ञमपि न प्रज्ञाघनं चादृष्टमेव च ॥

तदलक्षणमग्राह्यमव्यवहार्यमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते । स ब्रह्मप्रणवः स विज्ञेयो नापरस्तुरीयः सर्वत्र भानुवन्मुमुक्षूणामाधारः स्वयंज्योतिर्ब्रह्माकारः सर्वदा विराजते परब्रह्मत्वादित्युपनिषत् ॥

अष्टमोपदेशः ॥

अथ ब्रह्मस्वरूपं कथमिति नारदः पप्रच्छ । तं होवाच पितामहः किं ब्रह्मस्वरूपमिति ।

---

1. प्रज्ञमातरम् d1-3.

2. प्रज्ञानधनं for न प्रज्ञाघनं M; न प्रज्ञघनं NR. नादृष्टमेव च Ga.

3. °ग्राह्यमव्यव° Ga, M; others °ग्राह्यं यद्व्यव°.

5—6. नापारः d1; नावरः Ta-b; नापनेयः Ga.

6. आधारो यः स्वयं Ga.

7. °कारः Tb only; °काशः others; d1 adds स.

10. अथ परब्रह्म° M.

अन्योऽसावन्योऽहमस्मीति ये विदुस्ते पशवो न स्वभावंपश्यास्तमेवं ज्ञात्वा विद्वान्मृत्युमुखात्प्रमुच्यते । नान्यः पन्था विद्यतेऽयनाय ।

कालः स्वभावो नियतिर्यदृच्छा
भूतानि योनिः पुरुष इति चिन्त्यम् ।
संयोग एषां न त्वात्मभावा-
दात्मा ह्यनीशः सुखदुःखहेतोः ॥
ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि
कालात्मयुक्तान्यधितिष्ठत्येकः ॥
तमेकनेमिं त्रिवृतं षोडशान्तं

---

1 नु for न B

2 स्वभावंपश्याः er conj , स्वभावपशवः all

4 कालस्वभावो NR.

6 त्वात्मभानाद् d1.

7 प्यनीशः Ga

8 ॰योगा अनु॰ T1, B

12 तमेकनेमि त्रिवृतं G1 only, तमेकमस्मिंस्त्रिवृतं Tb, तमेकास्मिंस्त्रिवृतं others.

शताधारं विंशतिप्रत्यराभिः ।

अष्टकैः षड्भिर्विश्वरूपैकपाशं

त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥

पञ्चस्रोतोऽम्बुं पञ्चयोन्युग्रवक्त्रां

पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् ।

पञ्चावर्तां पञ्चदुःखौघवेगां

पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥

सर्वाजीवे सर्वसंस्थे बृहन्ते

तस्मिन्हंसो भ्राम्यते ब्रह्मचक्रे ।

पृथगात्मानं प्रेरितारं च मत्वा

जुष्टस्ततस्तेनामृतत्वमेति ॥

उद्गीतमेतत्परमं तु ब्रह्म

तस्मिंस्त्रयं स्वप्रतिष्ठाक्षरं च ।

अत्रान्तरं वेदविदो विदित्वा

लीनाः परे ब्रह्मणि तत्परायणाः ॥

---

3. त्रिमार्गछेदं Tb.

15. लीना ब्रह्मणि परे तत्परायणाः M; लीना ब्रह्मणि तत्परा योनि मुक्ताः Ga.

संयुक्तमेतत्क्षरमक्षरं च

व्यक्ताव्यक्तं भरते विश्वमीशः ।

अनीशश्चात्मा बध्यते भोक्तृभावा-

ज्ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

ज्ञाज्ञौ द्वावजावीशनीशा-

वजा ह्येका भोक्तृभोगार्थयुक्ता ।

अनन्तश्चात्मा विश्वरूपो ह्यकर्ता

त्रयं यदा विन्दते ब्रह्ममेतत् ॥

क्षरं प्रधानममृताक्षरं हरः

क्षरात्मानावीशते देव एकः ।

तदभिध्यानाद्योजनात्तत्त्वभावाद्

भूयश्चान्ते विश्वमायानिवृत्तिः ॥

ज्ञात्वा देवं मुच्यते सर्वपाशैः

---

2 भवति for भरते T1.

3 बध्यते Ga only, बुध्यते others

5. ईशनीशौ d1-2, Ta-b-1, Ga; ईशनेशौ others.

11. तस्याभि॰ Ga

13. ज्ञात्वा देवं सर्वपाशापहानिः Ga

क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।

तस्याभिध्यानात्तृतीयं देहभेदे

विश्वैश्वर्यं केवल आप्तकामः ॥

एतज्ज्ञेयं नित्यमेवात्मसंस्थं

नातः परं वेदितव्यं हि किंचित् ।

भोक्ता भोग्यं प्रेरितारं च मत्वा

सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥

आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परम् ॥

य एवं विदित्वा स्वरूपमेवानुचिन्तयन् 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' । तस्माद्विराड् भूतं भव्यं भविष्यद्भवत्यनश्वरस्वरूपम् ।

अणोरणीयान्महतो महीया-

नात्मास्य जन्तोर्निहितो गुहायाम् ।

---

2. त्रितयं Ta-b; तृतयं B

3. आप्तकामः Ga only; आत्मकामः others.

4. नित्यमेकात्म° NR.

8. आत्माविद्या d2.

11. भूतभव्यभविष्यद् Ga, g.

तमक्रतुं पश्यति वीतशोको

धातुः प्रसादान्महिमानमीशम् ॥

अपाणिपादो जवनो ग्रहीता

पश्यत्यचक्षुः स शृणोत्यकर्णः ।

स वेत्ति वेद्यं न च तस्यास्ति वेत्ता

तमाहुरग्र्यं पुरुषं महान्तम् ॥

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।

महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥

सर्वस्य धातारमचिन्त्यशक्तिं

सर्वागमान्तार्थविशेषवेद्यम् ।

परात्परं परमं वेदितव्यं

सर्वावसानेऽन्तकृद्वेदितव्यम् ॥

कविं पुराणं पुरुषोत्तमोत्तमं

सर्वेश्वरं सर्वदेवैरुपास्यम् ।

अनादिमध्यान्तमनन्तमव्ययं

---

1. तमः क्रतुः NR ; तमक्रतुः M

4 सं for स d2

12 सर्वावस्थाने Tb  ऽन्तकृद् *(r conj)* ; texts read सकृद्.

शिवाच्युताम्भोरुहगर्भभूधरम् ॥

येनावृतं सर्वमिदं प्रपञ्चं

पञ्चात्मकं पञ्चसु वर्तमानम् ।

पञ्चीकृतानन्तभवप्रपञ्चं

पञ्चीकृतस्वावयवैरसंवृतम् ।

परात्परं यन्महतो महान्तं

स्वरूपतेजोमयशाश्वतं शिवम् ॥

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।

नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥

नान्तःप्रज्ञं न बहिःप्रज्ञं न स्थूलं नास्थूलं न ज्ञानं नाज्ञानं नोभयतःप्रज्ञमग्राह्यमव्यवहार्यं स्वान्तःस्थितं स्वयमेवेति य एवं वेद स मुक्तो

1. °भूरुहम् NR, M.

2. येनावृतं *m conj.*; texts read स्वेनावृतं (स्वेनाहृतं M).

5. °वैः सं° d3, B.

6. यन्महतो all (with Taitt. Âr. VI, 1, 1); read यं महतो ?

7. शिवम्; here end of Ga.

9. °मानसो d1-2, T1; others °मनसो.

12. °स्थितं g, M; others °स्थितः.

तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम् ॥
अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम् ॥
अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥
सर्वस्य धातारमचिन्त्यशक्तिं
सर्वागमान्तार्थविशेषवेद्यम् ।
परात्परं परमं वेदितव्यं
सर्वावसानेऽन्तकृद्वेदितव्यम् ॥
कविं पुराणं पुरुषोत्तमोत्तमं
सर्वेश्वरं सर्वदेवैरुपास्यम् ।
अनादिमध्यान्तमनन्तमव्ययं

1. तमः क्रतुः NR ; तमक्रतु. M
4. सं for स d2
12 सर्वावस्थाने Th ऽन्तकृद् *er conj* ; texts read सकृद्.

शिवाच्युताम्भोरुहगर्भभूधरम् ॥

येनावृतं सर्वमिदं प्रपञ्चं
पञ्चात्मकं पञ्चसु वर्तमानम् ।
पञ्चीकृतानन्तभवप्रपञ्चं
पञ्चीकृतस्वावयवैरसंवृतम् ।
परात्परं यन्महतो महान्तं
स्वरूपतेजोमयशाश्वतं शिवम् ॥

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥

नान्तःप्रज्ञं न बहिःप्रज्ञं न स्थूलं नास्थूलं न ज्ञानं नाज्ञानं नोभयतःप्रज्ञमग्राह्यमव्यवहार्यं स्वान्तःस्थितं स्वयमेवेति य एवं वेद स मुक्तो

1. °भूरुहम् NR, M.
2. येनावृतं *ex conj.*; texts read स्वेनावृतं (स्वेनाहृतं M).
5. °वैः सं° d3, B.
6. यन्महतो all (with Taitt. Âr. VI, 1, 1); read यं महतो ?
7. शिवम् ; here end of Ga.
9. °मानसो d1-2, T1 ; others °मनसो.
12. °स्थितं g, M ; others °स्थितः.

भवति स मुक्तो भवतीत्याह भगवान्पितामहः ।

स्वस्वरूपज्ञः परिव्राडेकाकी चरति, भयत्रस्तसारङ्गवत्तिष्ठति, गमनविरोधं न करोति । स्वशरीरव्यतिरिक्तं सर्वं त्यक्त्वा षट्पदवृत्त्या स्थित्वा स्वरूपानुसंधानं कुर्वन्सर्वानन्यबुद्ध्या स्वस्मिन्नेव मुक्तो भवति । स परिव्राट् सर्वक्रियाकारकनिवर्तको गुरुशिष्यशास्त्रादिविनिर्मुक्तः सर्वसंसारं विसृज्य चामोहितः । परिव्राट् कथं निर्धनिकः सुखी । धनवान् ज्ञानाज्ञानोभयातीतः सुखदुःखातीतः स्वयंज्योतिःप्रकाशः सर्ववेद्यः सर्वज्ञः सर्वसिद्धिदः सर्वेश्वरः सोऽहमिति । तद्विष्णोः परमं पदं यत्र

1 No भगवान् Ta

2 परिव्राट् repeated in SR save Tb

3 सारङ्ग इव तिष्ठति M.

4 षट्पदगत्या Tb

5 सर्वानन्य° *cc conj* ; texts read सर्वमनन्य°. After °बुद्ध्या Tb inserts स्थावरवत्.

6 °कारनिव° *g*.

8. चामोहितः M, Bκ only, मामोहितैः d3, मामोहितेः d2; मामोहितः others.

गत्वा न निवर्तन्ते योगिनः । सूर्यो न तत्र भाति न शशाङ्कोऽपि । न स पुनरावर्तते न स पुनरावर्तते । तत्कैवल्यम् । इत्युपनिषत् ॥

नवमोपदेशः ॥

ॐ । भद्रं कर्णेभिरिति शान्तिः ॥

नारदपरिव्राजकोपनिषत्समाप्ता ॥

2 After शशाङ्कोऽपि T1 adds न पावकोऽपि

3. पुनरावर्तत इति तत्कैवल्यम् g

5 No Santi in Ta-1, g, Santi follows colophon in d2

# अथ निर्वाणोपनिषत्

ॐ । वाङ्मे मनसीति शान्तिः ॥

ॐ । अथ निर्वाणोपनिषदं व्याख्यास्यामः । परमहंसः सोऽहं परिव्राजकाः पश्चिमलिङ्गा मन्मथ-क्षेत्रपालाः । गगनसिद्धान्तः । अमृतकल्लोलनदी । अक्षयं निरञ्जनम् । निःसंशय ऋषिः । निर्वाणो देवता । निष्कलप्रवृत्तिः । निष्केवलज्ञानम् । ऊ-

---

2. Before the Śānti Tb and B have the Śloka: निर्वाणोपनिषद्वेद्यं निर्वाणानन्दतुन्दिलम् । त्रैपदानन्दसाम्राज्यं स्वमात्रमिति चिन्तये (चिन्तयेत् B).

4. सोऽहं परि° Ga, App.; others सोऽहम् । परि°. पश्चिमलिङ्गाः । मन्मथ° M, B, Ta.

5. °क्षेत्रपाला Gc; °क्षेत्रपालकाः variant of Tb. °सिद्धान्तम् Ta-b, Ga.

7. Ta omits Daṇḍa after देवता. निष्कुलप्रवृत्तिः d, M; निष्कूलप्रवृत्तिः B.

ध्वांम्नायः । निरालम्बपीठम् । संयोगदीक्षा । वियोगोपदेशः । दीक्षासंतोषपावनं च । द्वादशादित्यावलोकनम् । विवेकरक्षा । करुणैव केलिः । आनन्दमाला । एकान्तगुहायां मुक्तासनसुखगोष्ठी । अकल्पितभिक्षाशी । हंसाचारः । सर्वभूतान्तर्वर्ती हंस इति प्रतिपादनम् । धैर्यकन्था । उदासीनकौपीनम् । विचारदण्डः । ब्रह्मावलोकयोगपट्टः । श्रिया पादुका । परेच्छाचरणम् । कुण्डलिनीबन्धः । परापवादमुक्तो जीवन्मुक्तः । शिवयोगनिद्रा च खेचरीमुद्रा च । परमानन्दी । निर्गतगुणत्रयं

---

1 °पीठ Ta b others °पीठ

2 पान for पावन Tb, M, B

4 एकासनगुहाया d, M B॰ °मुखगोष्ठी Tb

5 अकल्पिताभि° Ta Ga omits Danda after °भिक्षाशी सर्वभूतान्तर्वर्तिहंस Ga

6—7 उदासीन कौपीनम् Tb

7 ब्रह्मावलोके योगवट्ट M

8 श्रिया *ex conj* श्रिया Gc, श्रीया Ga, श्रिया others No Danda after पादुका M चारणम् Gc °नीर्बन्ध Ta

9 M *omits* च

10 खेचरीनिद्रा Ta Gc °त्रयी for °त्रय Ta

विवेकलभ्यं मनोवागगोचरम् । अनित्यं जगद्यज-
नितं स्वप्नजगदभ्रगजादितुल्यं, तथा देहादिसंघातं
मोहगुणजालकलितं तद्रज्जुसर्पवत्कल्पितं विष्णु-
विध्यादिशताभिधानलक्ष्यम् । अङ्कुशो मार्गः । शू-
न्यं न संकेतः । परेश्वरसत्ता । सत्यसिद्धयोगो
मठः । अमरपदं न तत्स्वरूपम् । आदिब्रह्म स्व-
संवित् । अजपा गायत्री । विकारदण्डो ध्येयः ।

---

1 अनित्यजगद् Ga

1—2 जगज्जनित Ga, जगदयज्ञनित्य (?) Ta   जनित । स्वप्न° Ta b, M

2 Comma for Danda of texts

2—3 Ta b, M punctuate तथा देहादिसघात । मोहगुणजाल-कलित । तद्रज्जुसर्पवत्कल्पित । विष्णु° So Ga except first Danda Third Danda also in B

3 गुण Gc, M, B, others गण   °जालाकलित Ga, °जाल-कलन Gc   कलित for कल्पित d

4 लक्षण for लक्ष्य Ta

5 परमेश्वरसत्ता M, B   सत्ता सत्य° M, Ga

6 मत for मठ M, Bक   अमरपद न तत्स्वरूपम् Ta b, Ga, M, Bक, others omit न   आदिर्ब्रह्म Ta

7 गायत्री विकार° Ta b, Ga   विचार for विकार M

धार्य for ध्येय M, Bक

ध्वाम्नायः । निरालम्बपीठम् । संयोगदीक्षा । वि-
योगोपदेशः । दीक्षासंतोषपावनं च । द्वादशा-
दित्यावलोकनम् । विवेकरक्षा । करुणैव केलिः ।
आनन्दमाला । एकान्तगुहायां मुक्तासनसुखगोष्ठी ।
अकल्पितभिक्षाशी । हंसाचारः । सर्वभूतान्तर्वर्ती
हंस इति प्रतिपादनम् । धैर्यकन्था । उदासीन-
कौपीनम् । विचारदण्डः । ब्रह्मावलोकयोगपट्टः ।
श्रिया पादुका । परेच्छाचरणम् । कुण्डलिनीबन्धः ।
परापवादमुक्तो जीवन्मुक्तः । शिवयोगनिद्रा च
खेचरीमुद्रा च । परमानन्दी । निर्गतगुणत्रयं

1. ॰पीठं Ta-b, others ॰पीठः
2. पानं for पावनं Tb, M, B.
4. एकासनगुहायां d, M, Ba ॰मुखगोष्ठी Tb
5 अकल्पिताभि॰ Ta Ga omits Danda after ॰भिक्षाशी सर्वभूतान्तर्वर्तिहंस Ga
6—7. उदासीनः कौपीनम् Tb
7. ब्रह्मावलोको योगवट्टः M.
8 श्रिया *ex conj* ; क्रियां Gc; श्रीयां Ga; श्रियां others. *No Danda after* पादुका M. ॰चारणम् *Gc* ॰लीबन्धः Ta
9. M omits च.
10. खेचरीनिद्रा Ta, Gc. ॰त्रयी for ॰त्रयं Ta.

विवेकलभ्यं मनोवागगोचरम् । अनित्यं जगद्यज्जनितं स्वप्नजगदभ्रगजादितुल्यं, तथा देहादिसंघातं मोहगुणजालकलितं तद्रज्जुसर्पवत्कल्पितं विष्णुविध्यादिशताभिधानलक्ष्यम् । अङ्कुशो मार्गः । शून्यं न संकेतः । परेश्वरसत्ता । सत्यसिद्धयोगो मठः । अमरपदं न तत्स्वरूपम् । आदिब्रह्म स्वसंवित् । अजपा गायत्री । विकारदण्डो ध्येयः ।

---

1. अनित्यजगद् Ga.

1—2. जगज्जनितं Ga; जगदयज्ञनित्यं (!) Ta. जनितं । स्वप्न॰ Ta-b, M.

2. Comma for Daṇḍa of texts.

2—3. Ta-b, M punctuate: तथा देहादिसंघातं । मोहगुणजालकलितं । तद्रज्जुसर्पवत्कल्पितं । विष्णु॰. So Ga except first Daṇḍa. Third Daṇḍa also in B.

3. गुण Gc, M, B; others गण. ॰जालाकलितं Ga; ॰जालकलनं Gc. कलितं for कल्पितं d.

4. लक्षणं for लक्ष्यं Ta.

5. परमेश्वरसत्ता M, B. ॰सत्ता सत्य॰ M, Ga.

6. मतः for मठः M, Bk. अमरपदं न तत्स्वरूपम् Ta-b, Ga, M, Bk; others omit न. आदिर्ब्रह्म Ta.

7. गायत्री विकार॰ Ta-b, Ga. विचार for विकार M. धार्यः for ध्येयः M, Bk.

मनोनिरोधिनी कन्था । योगेन सदानन्दस्वरूप-
दर्शनम् । आनन्दभिक्षाशी । महाश्मशानेऽप्या-
नन्दवने वासः । एकान्तस्थानमानन्दमठम् ।
उन्मन्यवस्था । शारदा चेष्टा । उन्मनी गतिः ।
निर्मलगात्रं निरालम्बपीठम् । अमृतकल्लोलानन्दक्रि-
या । पाण्डरगगनमहासिद्धान्तः । शमदमादिदिव्य-
सत्त्वाचरणे क्षेत्रपात्रपटुता । परावरसंयोगः । तारको-
पदेशः । अद्वैतसदानन्दो देवता । नियमः स्वा-
न्तरिन्द्रियनिग्रहः । भयमोहशोकक्रोधत्यागस्त्यागः ।

---

1. ˚कन्था योगेन Ta. योगो सदानन्द˚ Gc.

3. एकान्तस्थानमानन्दमठम् Tb, M; एकान्तस्थानम् । आनन्दमठम् others. मठः for मठम् Gc.

4. उन्मन्यावस्था d. उन्मन्यवस्था । शारदाचेष्टा Gc, d, M, B; others omit Daṇḍa.

5. निर्मलगात्रम् । निरालम्बपीठम् Ta, Gc, d, M, B.† ˚कल्लोल-मानन्द˚ Ta-b, Gc.

6. पाण्डरगगनमहा˚ Ga, d, M; पाण्ड(!)गगनं महा˚ Ta; पाण्ड-रगगनम् । महा˚ B; पाण्डरगगनं महा˚ Tb, Gc.

6—7. ˚दिव्यसत्त्वाचरणे Ga only; ˚दिव्यशास्त्राचरणे others.

7. क्षेत्रपात्रपटुता all; read क्षेत्रपाल[न]पटुता?

8. आनन्दे for आनन्दो Ta. नियमस्वा˚ Ga.

परावरैक्यरसास्वादनम् । अनियामकत्वनिर्मलशक्तिः । स्वप्रकाशब्रह्मतत्त्वे शिवशक्तिसंपुटितप्रपञ्चच्छेदनं, तथा पत्राक्षाक्षिकमण्डलुभावाभावदहनम् । विभूत्याकाशाधारं शिवं तुरीयं यज्ञोपवीतम् । तन्मयी शिखा । चिन्मयं चोत्सृष्टिदण्डम् । संतताक्षिकमण्डलुम् । कर्मनिर्मूलनं कन्था । मायाममताहङ्कारदहनं, श्मशानेऽनाहताङ्गी । निस्त्रैगुण्यस्वरूपानुसंधानं समयभ्रान्तिहरणम् । कामादिवृ-

---

1. परापरैक्य° Tb, Ga. अनियमान्निर्मलशक्तिः Ga.

2. भेदनं for छेदनम् Tb, M. Comma for Daṇḍa of texts.

3. पत्राक्षानक्षि° Gc. °कमण्डलुभावा° Ga only; °कमण्डलभावा° Tb, M, d; °कमण्डलुः । भावा° B; °कमण्डलुं । भावा° Gc, Ta, variant of Tb.

3—4. विभूत्या° Ga only; विभ्रत्या° Tb, d, M; विसृत्या° Ta, Gc, B.

4. तन्मयी *ex conj.*; texts have तन्मया.

5. °रंडं for °दण्डं Tb; °रण्ड° Ga. °दण्डं संतताक्षि° Ga.

5—6. संतताक्षिककमण्डलुम् Gc; संततोक्षिकमण्डलुम् Ta, Ga, d.

6. कर्मनिर्मूलनकन्था M. कथा for कन्था Ta-b, Ga, d, M.

7. °दहनं श्मशाने । अनाहताङ्गी Ta-b, Ga, M; °दहनम् । श्मशानेऽनाहताङ्गी others. नाहताम्री (?) variant of Tb; न हताङ्गी Gc.

8. समयभ्रान्ति° *ex conj.*; समयं । भ्रान्ति° all.

त्तिदहनं । काठिन्यदृढकौपीनम् । चीराजिनवासः । अनाहतमन्त्रः । अक्रियैव जुष्टम् । स्वेच्छाचारः । स्वस्वभावो मोक्षः । परब्रह्मप्लववदाचरणम् । ब्रह्मचर्यशान्तिसंग्रहणम् । ब्रह्मचर्याश्रमेऽधीत्य वानप्रस्थाश्रमेऽधीत्य स सर्वसंविन्न्यासं संन्यासम् । अन्ते ब्रह्माखण्डाकारं नित्यं सर्वसंदेहनाशनम् । एतन्निर्वाणदर्शनं शिष्यं विना पुत्रं विना न देयम् । इत्युपनिषत् ॥

ॐ । वाङ्मे मनसीति शान्तिः ॥

निर्वाणोपनिषत्समाप्ता ॥

---

8 (p. २२९)—1. कामानिवृत्तिदहनं Ta.

1. °दहनं काठिन्य° Ga

2. °मन्त्रम् Ta-b, Ga, d. अक्रियैव Ga, M; अक्रिययैव others.

2—3. °चारः । स्व° *ex conj.*; °चारो स्व° M; °चारस्व° others.

3. मोक्षः परं ब्रह्म । प्लववद् B. परब्रह्म Ga; परब्रह्मा Tb; परात्ब्रह्मा Gc; परं ब्रह्म others.

4—5. वनप्रस्था° Ta.

5. सर्वविन्न्यासं Ta-b, Ga, M.

6. सर्वं देह° Ga

7. Gc, Bk omit विना¹. पुत्रं विना शिष्यं विना M.

दका नाम त्रिदण्डकमण्डलुशिखायज्ञोपवीतकाषाय-
वस्त्रधारिणो ब्रह्मर्षिगृहे मधुमांसं वर्जयित्वाष्टौ ग्रा-
सान्भैक्षाचरणं कृत्वा योगमार्गे मोक्षमेव प्रार्थ-
यन्ते । अथ हंसा नाम ग्रामैकरात्रं नगरे पञ्च-
रात्रं क्षेत्रे सप्तरात्रं तदुपरि न वसेत् । गोमूत्र-
गोमयाहारिणो नित्यं चान्द्रायणपरायणा योग-
मार्गे मोक्षमेव प्रार्थयन्ते । अथ परमहंसा नाम

---

1 °दको नाम T1, Gc, °दकानां T18, t, G7, °दकाः (no नाम) D5-8 त्रिदण्डं कमण्डलु शिखां (शिखा° t, शिखं Ga) यज्ञोपवीतं काषाय° Ta 1, t, Gc, D4, V, so G7, but with शिक्यं पात्रं जलपवित्रं added before शिखां, त्रिदण्डकमण्डलुं शिखा (°खां Tb) यज्ञोपवीतं काषाय° Tb-18

2 ब्रह्मर्षिगृहेषु T18, t मधुमांस (so) t, D5-8; °मांसौ G7.

3 भिक्षाचरणं T18, G7 कृत्वा श्रुत्वा योग° G7. योगमार्गे missing in T18, t

4 हंसो नाम Ga, हंसानां T18, t, G7 ग्रामे एकरात्रं G7, ग्रामे चैकरात्रं D5-8

5 तीर्थे for क्षेत्रे D5-8

6—7 चान्द्रायणपरा अध्यात्मनिष्ठाः योगमार्गे मोक्षमेव G7, चान्द्रायणपरा मोक्षमेव T18, चान्द्रायणनापरः (!) मोक्षमेव t

7 परमहंसानां for परमहंसा नाम T18, t, G7; परमहंसः (no नाम) D5-8

संवर्तकारुणिश्वेतकेतुजडभरतदत्तात्रेयशुकवामदेवहारीतकप्रभृतयोऽष्टौ ग्रासांश्चरन्तो योगमार्गे मोक्षमेव प्रार्थयन्ते । वृक्षमूले शून्यगृहे श्मशानवासिनो वा । साम्बरा वा दिगम्बरा वा । न तेषां धर्माधर्मौ लाभालाभौ । शुद्धाशुद्धद्वैतवर्जिताः समलोष्टाश्मकाञ्चनाः सर्ववर्णेषु भैक्षाचरणं कृत्वा

---

1—3. संवर्तक°——प्रार्थयन्ते is not here in T18, t, G7, D5-8; it appears, however, below l. 1 (p. २३६) between पश्यन्ति । and अथ जातरूपधरा, with the additional words तत्र (ततः D5-8) परमहंसाः at the beginning; अथ missing in D5-8.

1. °श्वेतकेतुदूर्वासऋभुनिदाघजडभरत° t, G7. °दत्तात्रेयरैवतकशुक° Tb, G7, D4.

2. °हारीतप्रभृ° G7, D4; °हरीतप्रभृ° D8; °हरीताकप्रभृ° D5; °हरीतकप्रभृ° t. ऽष्टौग्रासं चरन्तो Tb, D4; ऽष्टग्रासं चरन्तो Ga.

3. वृक्षमूल° T1, D5-8. शून्यागारदेवगृह for शून्यगृहे T18, t, D5-8; शून्यागारे देवगृहे G7; शून्यगृहे देवगृहे T1.

4. साम्बरो वा दिगम्बरो वा t, D5-8; सवासो वा दिगम्बरो वा G7; वासाम्बरा वा दिगम्बरा वा T1.

5. शुद्धाशुद्ध Ta-1, Ga-c; शुद्धाशुद्धा T18; शुद्धाशुद्धौ others. °वर्जितः D5-8.

6. °काञ्चनः D5-8. भिक्षा° G7; भैक्ष्य° D8.

सर्वत्रात्मैव पश्यन्ति । अथ जातरूपधरा निर्द्व- न्द्वा निष्परिग्रहाः शुक्लध्यानपरायणा आत्मनिष्ठाः प्राणसंधारणार्थं यथोक्तकाले भैक्षमाचरन्तः शू- न्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशाला- ग्निहोत्रशालानदीपुलिनगिरिकन्दरकुहरकोटरनिर्झर- स्थण्डिलेषु तत्र ब्रह्ममार्गे सम्यक्संपन्नाः शुद्ध- मानसाः परमहंसाचरणेन संन्यासेन देहत्यागं

---

1 सर्वत्रात्मानं पश्यन्ति D5 8, सर्वत्रात्मैवेति पश्यन्ति M, B जातरूपधरस्सन्निर्द्व° T18 t

1—1 (p २३७) G7 has throughout singulars instead of the plurals अथ जातरूपधरो निर्द्वन्द्वो निष्परिग्रह भैक्षमा- चरन् करोति। स परमहंसो So T18, t, but with one or two sporadic plurals

2 शुद्धध्यान° Ga अध्यात्मनिष्ठा t

3 भैक्ष्यम् D5

4 °गारे देवगृहे D5 8 तृणकूटी° D5 8

5 शाला missing in D5, G7 गिरिगह्वरकन्दरकोटर° t, D8, °गिरिकुहरकन्दरकोटर° T18 G7

6 °स्थण्डिलेषु T18 t G7, स्थलेषु D5, others °स्थण्डिले तत्त्व for तत्र T18 t, D5 8 ब्रह्ममार्गसम्यक्सपन्ना D5 8

7 परमहंसाचरणसन्यासेन T18, t, परमहंसा परमसन्यासेन G7

कुर्वन्ति । ते परमहंसा नामेत्युपनिषत् ॥

ॐ । पूर्णमद इति शान्तिः ॥

भिक्षुकोपनिषत्समाप्ता ॥

---

1. स परमहंसो नाम (repeated in t) स परमहंसो नामेति । t, G7, D5-8. No Sānti in Ta-1-18, t, Ga-c-7.

# अथ तुरीयातीतावधूतोपनिषत्

ॐ । पूर्णमद इति शान्तिः ॥

ॐ । अथ तुरीयातीतावधूतानां कोऽयं मार्ग-
स्तेषां का स्थितिरिति पितामहो भगवन्तं पितर-
मादिनारायणं परिसमेत्योवाच । तमाह भगवा-
न्नारायणः । योऽयमवधूतमार्गस्थो लोके दुर्लभतरो
न तु बाहुल्यः । यद्येको भवति स एव नित्यपूतः

---

1. अथ शुक्लयजुर्वेदे तुरीयातीतावधूतोपनिषत् M, G6; अथ तुरीया-तीतोपनिषत् Ga.

2. Before the Sānti Tb, B have the following: ॐ । तुरीयातीतोपनिषद्वेद्यं यत्परमाक्षरं । तत्तुर्यातीतचिन्मात्रं स्वमात्रं चिन्तयेऽन्वहम् ॥ १ ॥ तुरीयातीतसंन्यासपरिव्राजाक्षमालिका । अव्यक्तैकाक्षरं पूर्णा सूर्याक्ष्यध्यात्मकुण्डिका ॥ २ ॥. Sloka २ also in Ta.

4. सिद्धिरिति for स्थितिरिति G6.

5—6. भगवानादिनारायणो Gc.

7. सर्वे for एव Gc.

स एव वैराग्यमूर्तिः स एव ज्ञानाकारः स एव वेदपुरुष इति ज्ञानिनो मन्यन्ते । महापुरुषो यस्तच्चित्तं मय्येवावतिष्ठते । अहं च तस्मिन्नेवावस्थितः। सोऽयमादौ तावत्क्रमेण कुटीचको बहूदकत्वं प्राप्य, बहूदको हंसत्वमवलम्ब्य, हंसः परमहंसो भूत्वा, स्वरूपानुसंधानेन सर्वप्रपञ्चं विदित्वा, दण्डकमण्डलुकटिसूत्रकौपीनाच्छादनं स्वविध्युक्तक्रियादिकं सर्वमप्सु संन्यस्य, दिगम्बरो भूत्वा, विवर्णजीर्णवल्कलाजिनपरिग्रहमपि संत्यज्य, तदूर्ध्वममन्त्रवदाचरन् , क्षौराभ्यङ्गस्नानोर्ध्वपुण्ड्रादिकं विहाय, लौकिकवैदिकमप्युपसंहृत्य, सर्वत्र पुण्या-

---

1 वैराग्यमुक्ति T1 G6, M, B     विज्ञाना° for ज्ञाना° G6

4 कुटीचकबहूदकत्व Gc

7 कौपीनाच्छादनस्य स्व T1 M, G6, कौपीनाच्छादनस्व Tb Gc

8 न्यस्य for सन्यस्य G6

9 परिग्रह not in T1

9—10 सत्यज्य मन्त्रवदाचरन् G1

10 क्षौराप्यङ्ग° G1

पुण्यवर्जितो, ज्ञानाज्ञानमपि विहाय, शीतोष्ण-सुखदुःखमानावमानं निर्जित्य, वासनात्रयपूर्वकं निन्दानिन्दागर्वमत्सरदम्भदर्पेच्छाद्वेपकामक्रोधलो-भमोहहर्षामर्षासूयात्मसंरक्षणादिकं दग्ध्वा, स्ववपुः कुणपाकारमिव पश्यन्, अप्रयत्नेनानियमेन लाभा-लाभौ समौ कृत्वा, गोवृत्त्या प्राणसंधारणं कुर्वन् यत्प्राप्तं तेनैव निर्लोलुपः, सर्वविद्यापाण्डित्यप्रपञ्चं भस्मीकृत्य, स्वरूपं गोपयित्वा, ज्येष्ठाज्येष्ठत्वापला-पकः, सर्वोत्कृष्टत्वसर्वात्मकत्वाद्वैतं कल्पयित्वा म-त्तो व्यतिरिक्तः कश्चिन्नान्योऽस्तीति देवगुह्यादि-

1 सज्ञितो for वर्जितो Gb
2 निर्जित्य M Gb, Br
3 °निन्दगर्व Pr, M, Gb  दर्पद्वेप B, V
4 यात्मनस्सरक्षणादिक Gc
5 अयत्नेन V, B
6 समौ Tb  कृत्वा (altered from भूत्वा) Gc only, others भूत्वा
7 Ga omits यन्
8 गोपयित्वा all (read गोपायित्वा -) +
8—9 °त्वालापक. Gn
9 °पकसर्वो Ga-b  सर्वालापकत्वाद्वैत Ga
10 व्यतिरिक्तः Ga

धनमात्मन्युपसंहृत्य, दुःखेन नोद्विग्नः, सुखेन ना-
नुमोदको, रागे निःस्पृहः, सर्वत्र शुभाशुभयोर-
नभिस्नेहः, सर्वेन्द्रियोपरमः, स्वपूर्वापन्नाश्रमाचार-
विद्याधर्मप्राभवमननुस्मरन् , त्यक्तवर्णाश्रमाचारः,
सर्वदा दिवानक्तं समत्वेनास्वप्नः, सर्वदा संचार-
शीलो, देहमात्रावशिष्टो, जलस्थलकमण्डलुः, सर्व-
दानुन्मत्तो बालोन्मत्तपिशाचवदेकाकी संचरन् ,
असम्भाषणपरः, स्वरूपध्यानेन निरालम्बमवलम्ब्य,
स्वात्मनिष्ठानुकूल्येन सर्वं विस्मृत्य, तुरीयातीताव-

---

10 (p २४३)—1 देवगुह्यादिधनम् V, B, देवगुह्यादिजनम् Ga, वेद(so)गुह्यत्वादिन्धनम् G6, देवगुह्यादीन्धनम् others (also Bक)

1 दुःखे for दुःखेन Tb, G6 सुखे for सुखेन Ga

3 श्वपूर्वा° for स्वपूर्वा° M, G6, Bक

4 प्रभवम् Tb अनुस्मरन् for अननुस्मरन् Ta-b, M, G1 c

5 नक्त for नक्तं Ta, V, B समत्वमेवास्वप्न G6, सत्वमेवास्वप्न M Before सर्वदा Ta-b, G6 insert सर्वत्र

6 देहयात्रा° G6

8 °परस्य स्वरूप° Tb स्वरूपानुसंधानेन Ga

9 °घूल्येन Ga only, others °कूलेन

9—1 (p २४५) तुरीयातीतोऽवधूत° Ta, M, Ga-6

धूतवेषेणाद्वैतनिष्ठापरः, प्रणवात्मकत्वेन देहत्यागं करोति यः सोऽवधूतः स कृतकृत्यो भवतीत्युपनिषत् ॥

ॐ । पूर्णमद इति शान्तिः ॥

तुरीयातीतावधूतोपनिषत्समाप्ता ॥

---

4. इति तुरीयातीतोपनिषत्समाप्ता Ga.

# अथ संन्यासोपनिषत्

ॐ । आप्यायन्त्विति शान्तिः ॥

ॐ । अथातः संन्यासोपनिषदं व्याख्यास्यामः । योऽनुक्रमेण संन्यस्यति

[अयमध्यायः कठश्रुत्युपनिषदारम्भे द्रष्टव्यः]

य एवं विद्वानेतेनात्मानं संधत्ते ॥

इति प्रथमोऽध्यायः ॥

ॐ । चत्वारिंशत्संस्कारसंपन्नः सर्वतो विरक्त-श्चित्तशुद्धिमेत्याशासूयेर्ष्याहंकारं दग्ध्वा साधनच-

---

2. Before the Sānti, Tb and B have the Sloka: संन्यासोपनिषद्वेद्यं संन्यासिपटलाश्रयम् । सत्तासामान्यविभवं स्वमात्रमिति भावये ॥. After the Sānti G6 has स्वस्तु हरिः ॐ, B हरिः ॐ.

10. No ॐ in Tb, Gc, D4. ॰संस्कारोपपन्नः G6.

तुष्टयसंपन्न एव संन्यस्तुमर्हति ।

संन्यासे निश्चयं कृत्वा पुनर्न च करोति यः ।
स कुर्यात्कृच्छ्रमात्रं तु पुनः संन्यस्तुमर्हति ॥
संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः ।
संन्यासविघ्नकर्ता च त्रीनेतान्पतितान्विदुः ॥

अथ पण्डः पतितोऽङ्गविकलः स्त्रैणो बधिरोऽर्भको मूकः पापण्डश्चक्री लिङ्गी कुष्ठी वैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको नास्तिको वैराग्यवन्तोऽप्येते न संन्यासार्हाः । संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः ।

आरूढपतितापत्यं कुनखी श्यावदन्तकः ।
क्षयी तथाङ्गविकलो नैव संन्यस्तुमर्हति ॥

---

5 इति added after विदुः ॥ by G6, M, B

7 पापण्डश्च क्लीबी कुष्ठी वैखानस° G6

8 °द्विजो for °द्विजौ Ta

9 वैराग्यरहितोऽप्येते संन्यासानर्हाः G6, M

11. शावदन्तकः D4.

12. क्षीबस्तथाङ्गविकलो D4, Br.

संप्रत्यवसितानां च महापातकिनां तथा ।
व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत् ॥
व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम् ।
सत्यशौचपरिभ्रष्टं संन्यासं नैव कारयेत् ॥
एते नार्हन्ति संन्यासमातुरेण विना क्रमम् ॥

ओं भूः स्वाहेति शिखामुत्पाट्य यज्ञोपवीतं बहिर्न निवसेत् । यशो बलं ज्ञानवैराग्यं मेधां प्रयच्छेति यज्ञोपवीतं छित्वा ओं भूः स्वाहेत्यप्सु वस्त्रं कटिसूत्रं विसृज्य संन्यस्तं मयेति त्रिवारमभिमन्त्रयेत् ।

संन्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा परं ब्रह्माधिगच्छति ॥
षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च ।
कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥

---

3. °वर्जितः Ta.

5. G6 adds इति after क्रमम् ॥

7. Ga omits न. ज्ञानं वैराग्यं G6, M, B.

9. कटिमात्रं G6. कटिसूत्रं च विसृज्य G6, M, B.

ये च संतानजा दोषा ये दोषा देहसंभवाः ।
प्रेपाग्निर्निर्दहेत्सर्वांस्तुपाग्निरिव काञ्चनम् ॥
सखा मा गोपायेति दण्डं परिग्रहेत् ।
दण्डं तु वैणवं सौम्यं सत्वचं समपर्वकम् ।
पुण्यस्थलसमुत्पन्नं नानाकल्मषशोधितम् ॥
अदग्धमहतं कीटैः पर्वग्रन्थिविराजितम् ।
नासादघ्नं शिरस्तुल्यं भ्रुवोर्वा विभृयाद्यतिः ॥
दण्डात्मनोस्तु संयोगः सर्वदा तु विधीयते ।
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥

जगज्जीवनं जीवनाधारभूतं मातेव मा मन्त्र-
यस्व सर्वदा सर्वसौम्येति कमण्डलुं परिगृह्य योग-

2 प्रेपा° G6, B    काञ्चन. B

3. गोपयेति Tb, Ga-c, B

5 °स्थली° G6    °शोभितं Ta-b, G6

8 सर्वदा Ta, G6, D4, सर्वथा others

10. जीवनाजीवनाधारभूतं G6    °वीतं for °भूतं variant of Tb    मातेव मा मन्त्र° Variant of Tb only; मातेवरामन्त्र° Tb text; मातेमामन्त्र° others.

11. No सर्वदा in Tb, G6, M, B    सर्वदा सौम्येति Gc, सर्वसाम्येति Tb

पट्टाभिषिक्तो भूत्वा यथासुखं विहरेत् ॥

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥

वैराग्यसंन्यासी ज्ञानसंन्यासी ज्ञानवैराग्यसंन्यासी कर्मसंन्यासी चेति चातुर्विध्यमुपागतः । तद्यथेति । दृष्टानुश्रविकविषयवैतृष्ण्यमेत्य प्राक्पुण्यकर्मविशेषात्संन्यस्तः स वैराग्यसंन्यासी । शास्त्रज्ञानात्पापपुण्यलोकानुभवश्रवणात्प्रपञ्चोपरतो देहवासनां शास्त्रवासनां लोकवासनां त्यक्त्वा वमनान्नमिव प्रवृत्तं सर्वं हेयं मत्वा साधनचतुष्टयसंपन्नो यः संन्यस्यति स एव ज्ञानसंन्यासी । क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां

5. कर्मसंन्यासीति G6, B, कर्मसंन्यासश्चेति Ta, Gc  °गतं for °गतः Ta.

6. दृष्टासुश्र° G6.

7. वैराग्यसंन्यासः Ta.

8. प्रपञ्चोपशमतो Ga.

9—10. त्यक्त्वाऽवमानं मानमिव G6, M.

10. प्रवृत्तं *ω conj.*; texts have प्रवृत्तिं.

स्वरूपानुसंधानेन देहमात्रावशिष्टः संन्यस्य जातरूपधरो भवति स ज्ञानवैराग्यसंन्यासी । ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्याभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति स कर्मसंन्यासी ।

संन्यासः षड्विधो भवति कुटीचकबहूदकहंसपरमहंसतुरीयातीतावधूता इति । कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनशाटीकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमात्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः । बहूदकः शिखादिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याष्टकवलाशी । हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधार्यसंक्लृप्तमाधूकरान्नाशी कौपीनखण्डतुण्डधारी । पर-

4—5 कर्मसन्यासीति M

6 M, Bक add स before सन्यास   कुटीचको Tb

7. °धूता इति G6, M, others °धूताश्चेति

9—10 °शिक्यादिमत्रसाधन° Ta-b, Ga-c.

14 Gc omits माधूकर

महंसः शिखायज्ञोपवीतरहितः पञ्चगृहेषु करपात्रये-
ककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशा-
टीधरो वा भस्मोद्धूलनपरः सर्वत्यागी । तुरीया-
तीतो गोमुखवृत्त्या फलाहारी, अन्नाहारी चेद्गृह-
त्रये, देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृ-
त्तिकः । अवधूतस्त्वनियमः पतिताभिशस्तवर्जन-
पूर्वकं सर्ववर्णेष्वजगरवृत्याहारपरः स्वरूपानुसंधान-
परः ।

जगत्तावदिदं नाहं सवृक्षतृणपर्वतम् ।
यद्बाह्यं जडमत्यन्तं तत्स्यां कथमहं विभुः ।
कालेनाल्पेन विलयी देहो नाहमचेतनः ॥
जडया कर्णशष्कुल्या कल्यमानः क्षणस्थया ।

1—2. °पात्र एक° G6, M.

4. गोमुखवृत्त्याहारी फलाहारी Gc.

5—6. °वृत्तिः for °वृत्तिकः G6.

10. तत्स्यात Ta-b, Ga-c. Tb has विद्रुः with विभुः as a variant.

11. विलयाद् Tb.

12. कल्यमानः *ex conj.*; कल्यमान Tb; कल्पमान others.

शून्याकृतिः शून्यभवः शब्दो नाहमचेतनः ॥
त्वचा क्षणविनाशिन्या प्राप्योऽप्राप्योऽयमन्यथा ।
चित्प्रसादोपलब्धात्मा स्पर्शो नाहमचेतनः ॥
लब्धात्मा जिह्वया तुच्छो लोलया लोलसत्तया ।
स्वल्पस्पन्दो द्रव्यनिष्ठो रसो नाहमचेतनः ॥
दृश्यदर्शनयोर्लीनं क्षयि क्षणविनाशिनोः ।
केवले द्रष्टरि क्षीणं रूपं नाहमचेतनम् ॥
नासया गन्धजडया क्षयिण्या परिकल्पितः ।
पेलवोऽनियताकारो गन्धो नाहमचेतनः ॥
निर्ममोऽमननः शान्तो गतपञ्चेन्द्रियभ्रमः ।
शुद्धचेतन एवाहं कलाकलनवर्जितः ॥
चेत्यवर्जितचिन्मात्रमहमेषोऽवभासकः ।
सबाह्याभ्यन्तरव्यापी निष्कलोऽहं निरञ्जनः ।
निर्विकल्पचिदाभास एक आत्मास्मि सर्वगः ॥

---

2 प्राप्तो Ga
4 मन्दो for तुच्छो G6, M, Bक
5 स्वल्पस्पन्दो Gc-6, B
12 चेत्य *a conj.*; texts read चैत्य (altered to चैत्त in Ga).
14. निर्विकल्पश्चिदा° Ga

मयैव चेतनेनेमे सर्वे घटपटादयः ।
सूर्यान्ता अवभास्यन्ते दीपेनेवात्मतेजसा ॥
मयैवैताः स्फुरन्तीह विचित्रेन्द्रियवृत्तयः ।
तेजसान्तःप्रकाशेन यथाग्निकणपङ्क्तयः ॥
अनन्तानन्दसंभोगा परोपशमशालिनी ।
शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ॥
सर्वभावान्तरस्थाय चेत्यमुक्तचिदात्मने ।
प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥
विचित्राः शक्तयः स्वच्छस्वमायानिर्विकारया ।
चिता क्रियन्ते समया कलाकलनमुक्तया ॥
कालत्रयमुपेक्षित्र्या हीनायाश्चेत्यबन्धनैः ।
चितश्चेत्यमुपेक्षित्र्याः समतैवावशिष्यते ॥

---

2 अवभासन्ते Ta, Ga  दीपेनैवात्म° Ib
3 विजितेन्द्रिय° Tb
6 चिन्मया Gb
7 चेत्य *ex conj* , नित्य Ga, चेत्य others
9 स्वच्छस्वमाया *ex conj* , स्वच्छसमया Ta, स्वच्छ स्वमाया Tb , स्वच्छाः समया Gc , स्वच्छा समा या others
11 कालक्षयमुपे° Gb, कालत्रयमपे° Ta
12 चेत्य *ex conj* , texts read चैत्य (altered to चैत्त in Ga)

सा हि वाचामगम्यत्वादसत्तामिव शाश्वतीम् ।
नैरात्म्यसिद्धान्तदशामुपयातेव शिष्यते ॥

ईहानीहामयैरन्तर्या चिदावलिता मलैः ।
सा चिन्नोत्पतितुं शक्ता पाशबद्धेव पक्षिणी ॥

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ।
धराविवरमग्नानां कीटानां समतां गताः ॥

आत्मनेऽस्तु नमो मह्यमविच्छिन्नचिदात्मने ।
परामृष्टोऽस्मि लब्धोऽस्मि प्रोदितोऽस्म्यचिरादहम्॥

उद्धृतोऽस्मि विकल्पेभ्यो योऽस्मि सोऽस्मि नमोऽस्तु ते ।
तुभ्यं मह्यमनन्ताय मह्यं तुभ्यं चिदात्मने ॥

---

1 °त्वादनन्तामिव G6

2 नैरात्म° Gc 6, B   सिद्धयान्त° G6, सिद्धात्म° Tb, Gc, Bक   °यातेव Ta, G1, D4, °यात्यैव Tb, °यातैव others.

3 चिता° for चिदा° Tb text, Ga-6, D4, M, Bक   °फलिता Tb   मतै. for मलैः G6

4 चिन्नोत्पतितुं *et conj* , texts read चिन्नोत्पादितु

5 समृद्धेन for समुत्थेन Tb

6 धाराविवर° Gc

7 अविच्छिन्न° Ta, Gc 6, B

9. उद्धृतो Ga, उद्यतो G6

नमस्तुभ्यं परेशाय नमो मह्यं शिवाय च ।
तिष्ठन्नपि हि चासीनो गच्छन्नपि न गच्छति ।
शान्तोऽपि व्यवहारस्थः कुर्वन्नपि न लिप्यते ॥
सुलभश्चायमत्यन्तं सुज्ञेयश्चाप्तबन्धुवत् ।
शरीरपद्मकुहरे सर्वेषामेव षट्पदः ॥
न मे भोगस्थितौ वाञ्छा न मे भोगविसर्जने ।
यदायाति तदायातु यत्प्रयाति प्रयातु तत् ॥
मनसा मनसि च्छिन्ने निरहंकारतां गते ।
भावेन गलिते भावे स्वस्थस्तिष्ठामि केवलः ॥
निर्भावं निरहंकारं निर्मनस्कमनीहितम् ।
केवलानन्दशुद्धात्मन्येव तिष्ठति मे रिपुः ॥
तृष्णारज्जुगणं छित्वा मच्छरीरकपञ्जरात् ।

---

1 पराय for शिवाय Ga

2. चासीनो *cc conj.*; नासीनो all.

6 च for मे' Ta  च for मे' variant of Tb.  °विवर्जने Ga-6.

9 स्वच्छः for स्वस्थः Ta

11. केवलानन्द° Gb, M; केवलस्पन्द° Ta; केवलास्पन्द° others. °शुद्धात्मा स्वैव Tb.

12. गुणं for गणं Ta.  भित्त्वा for छित्वा Tb.

न जाने क्व गतोड्डीय निरहंकारपक्षिणी ॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
यः समः सर्वभूतेषु जीवितं तस्य शोभते ॥
योऽन्तःशीतलया बुद्ध्या रागद्वेषविमुक्तया ।
साक्षिवत्पश्यतीदं हि जीवितं तस्य शोभते ॥
येन सम्यक्परिज्ञाय हेयोपादेयमुज्झता ।
चित्तस्यान्तेऽर्पितं चित्तं जीवितं तस्य शोभते ॥
ग्राह्यग्राहकसंबन्धे क्षीणे शान्तिरुदेत्यलम् ।
स्थितिमभ्यागता शान्तिर्मोक्षनाम्नाभिधीयते ॥
भ्रष्टबीजोपमा भूयोजन्माङ्कुरविवर्जिता ।
हृदि जीवद्विमुक्तानां शुद्धा भवति वासना ॥
पावनी परमोदारा शुद्धसत्त्वानुपातिनी ।
आत्मध्यानमयी नित्या सुषुप्तिस्थेव तिष्ठति ॥
चेतनं चित्तरिक्तं हि प्रत्यक्चेतनमुच्यते ।
निर्मनस्कस्वभावत्वान्न तत्र कलनामलम् ॥

---

6. °मुज्झिता Th, Ga, D4; °वर्जिता Gc.
7. चित्तस्यान्तर्हितं Ta.
9. मोक्षनाम्नाभिधीयते *ex conj*; °नाम्न्यभि° M, °नामाभि° others.

सा सत्यता सा शिवता सावस्था पारमार्थिकी ।
सर्वज्ञता सा संतृप्तिर्नन्नु यत्र मनः क्षतम् ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
निरस्तमननानन्दः संविन्मात्रपरोऽस्म्यहम् ॥
मलं संवेद्यमुत्सृज्य मनो निर्मूलयन्परम् ।
आशापाशानलं छित्वा संविन्मात्रपरोऽस्म्यहम् ॥
अशुभाशुभसंकल्पः संशान्तोऽस्मि निरामयः ।
नष्टेष्टानिष्टकलनः संविन्मात्रपरोऽस्म्यहम् ॥
आत्मतापरते त्यक्त्वा निर्विभागो जगत्स्थितौ ।
वज्रस्तम्भवदात्मानमवलम्ब्य स्थिरोऽस्म्यहम् ।
निर्मलायां निराशायां स्वसंवित्तौ स्थितोऽस्म्यहम्॥
ईहितानीहितैर्मुक्तो हेयोपादेयवर्जितः ।
कदान्तस्तोपमेष्यामि स्वप्रकाशपदे स्थितः ॥

---

1 पर for पार Ta, Ga-6. °मार्थिकी Ga-6, M; °मात्मिकी Ta-b, D4, Ge, °मात्मकी B

6. आशापाशमलं Ga-6, M

7. No Visarga in Ta; expunged in D4.

10 स्थितो Ge

11. This HSl. is missing in G6.

कदोपशान्तमननो धरणीधरकन्दरे ।
समेष्यामि शिलासाम्यं निर्विकल्पसमाधिना ॥
निरंशध्यानविश्रान्तिमूकस्य मम मस्तके ।
कदा तार्णं करिष्यन्ति कुलायं वनपुत्रिकाः ॥
संकल्पपादपं तृष्णालतं छित्वा मनोवनम् ।
विततां भुवमासाद्य विहरामि यथासुखम् ॥
पदं तदनुयातोऽस्मि केवलोऽस्मि जयाम्यहम् ।
निर्वाणोऽस्मि निरीहोऽस्मि निरंशोऽस्मि निरीप्सितः ॥
स्वच्छतोर्जितता सत्ता हृद्यता सत्यता ज्ञता ।
आनन्दितोपशमिता सदाप्रमुदितोदिता ।
पूर्णतोदारता सत्या कान्तिसत्ता सदैकता ॥

---

1 °धरणीधरकोटरे G6, D4, Tb text, M

3 निराशध्यान° Ta, Gc विश्रान्ति for विश्रान्ति G6, M

5 वनोपमम् for मनोवनम् M

8 निरशो for निर्वाणो variant of Tb निराशो for निरशो Gc

9 स्वच्छतोर्मितत Ta सत्यवाक्यता for सत्यता ज्ञता G6, M

10 आनन्दतो° Ta, variant of Tb, अनादितो° Br °शमिता *cc conj.*, °शमना Gc, °शमता others

11 शान्तिसत्ता G6, M

इत्येवं चिन्तयन्भिक्षुः स्वरूपस्थितिमञ्जसा ।
निर्विकल्पस्वरूपज्ञो निर्विकल्पो बभूव ह ॥

आतुरो जीवति चेत्क्रमसंन्यासः कर्तव्यः । न शूद्रस्त्रीपतितोदक्यासंभाषणम् । न यतेर्देवपूजा उत्सवदर्शनम् । तस्मान्न संन्यास एष लोकः । आतुरकुटीचकयोर्भूर्लोकभुवर्लोकौ । बहूदकस्य स्वर्गलोकः । हंसस्य तपोलोकः । परमहंसस्य सत्यलोकः । तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसंधानेन भ्रमरकीटन्यायवत् । स्वरूपानुसंधानव्यतिरिक्तान्यशास्त्राभ्यास उष्ट्रकुङ्कुमभारवद्व्यर्थः।

---

2 स्वरूपज्ञ° G6, M , स्वरूपतो T1 , स्वरूपस्थोज्ञो (?) Gc हेति for ह M , हीति G6

4—5 °पूजा उत्सव° *er conj* , °पूजोत्सव G1, °पूजानुत्सव° others तस्मान्नसंन्यास एष लोक *er conj* , तस्मान्न संन्यास एस्लोकः G1, तस्मान्न संन्यासमेष लोकः G6, M , तस्मान्न सन्यासमेव लोक. variant of Tb , तस्मान्न संन्यासमेकलोक others.

6—7 स्वर्लोकः Ga

10 °भ्यास उष्ट्र° *er conj* , °भ्यासैरुष्ट्र° all व्यर्थता for व्यर्थः G6, M.

मनःसंकल्परहितांस्त्रीन्गृहान्पञ्च सप्त वा ।
मधुमक्षिकवत्कृत्वा माधूकरमिति स्मृतम् ॥
प्रातःकाले च पूर्वेद्युर्यद्भक्तैः प्रार्थितं मुहुः ।
तद्भैक्षं प्राक्प्रणीतं स्यात्स्थितिं कुर्यात्तथापि वा ॥
भिक्षाटनसमुद्योगाद्येन केन निमन्त्रितम् ।
अयाचितं तु तद्भैक्षं भोक्तव्यं च मुमुक्षुभिः ॥
उपस्थानेन यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन तत् ।
तात्कालिकमिति ख्यातं भोक्तव्यं यतिभिः सदा ॥
सिद्धमन्नं यदानीतं ब्राह्मणेन मठं प्रति ।
उपपन्नमिति प्राहुर्मुनयो मोक्षकाङ्क्षिणः ॥
चरेन्माधूकरं भैक्षं यतिर्म्लेच्छकुलादपि ।
एकान्नं न तु भुञ्जीत बृहस्पतिसमादपि ।
याचितायाचिताभ्यां च भिक्षाभ्यां कल्पयेत्स्थितिम् ॥

---

1. रहितान् त्रीन् all save Tb, Gc, B
4. स्याच्छित्तं G6, M कुर्यादथापि वा M.
5. °समुद्योगाद् G6, M. नियन्त्रितम् G6, निमन्त्रितः Gc.
8. सदा Tb only, others तदा
9. यदा नित्यं Gc
13. कल्पयेत्स्थितिम् Ta, Ga-6, M.

न वायुः स्पर्शदोषेण नाग्निर्दहनकर्मणा ।
नापो मूत्रपुरीषाभ्यां नान्नदोषेण मस्करी ॥
विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
कालेऽपराह्णभूयिष्ठे भिक्षाचरणमाचरेत् ॥
अभिशस्तं च पतितं पाषण्डं देवपूजकम् ।
वर्जयित्वा चरेद्भैक्षं, सर्ववर्णेषु चापदि ॥
घृतं श्वमूत्रसदृशं मधु स्यात्सुरया समम् ।
तैलं सूकरमूत्रं स्यात्सूपं लशुनसंमितम् ॥
माषापूपादि गोमांसं क्षीरं मूत्रसमं भवेत् ।
तस्मात्सर्वप्रयत्नेन घृतादीन्वर्जयेद्यतिः ॥
घृतसूपादिसंयुक्तमन्नं नाद्यात्कदाचन ॥
पात्रमस्य भवेत्पाणिस्तेन नित्यं स्थितिं नयेत् ।
पाणिपात्रश्चरन्योगी नासकृद्भैक्षमाचरेत् ॥

---

2. नाल्पो for नापो Ta.
3. व्यङ्गारे M. भुक्तवर्जिते Ta-b, G6.
4. ऽपराह्णभूयिष्ठे G6, M ; ऽपराह्णे भूयिष्ठे others.
6. भैक्ष्यं D4. वापदि Ta.
7. च मूत्र° for श्वमूत्र° D4, G6, M.

आस्येन तु यदाहारं गोवन्मृगयते मुनिः ।
तदा समः स्यात्सर्वेषु सोऽमृतत्वाय कल्पते ॥
आज्यं रुधिरमिव त्यजेदेकत्रान्नं पललमिव ग-
न्धलेपनमशुद्धलेपनमिव क्षारमन्त्यजमिव वस्त्रमु-
च्छिष्टपात्रमिवाभ्यङ्गं स्त्रीसङ्गमिवोष्णोदकं मूत्रमिव
स्पृहां गोमांसमिव ज्ञातचरदेशं चण्डालवाटिका-
मिव स्त्रियमहिमिव सुवर्णं कालकूटमिव सभा-
स्थलं श्मशानस्थलमिव राजधानीं कुम्भीपाकमिव
शवपिण्डवदेकत्रान्नम् । न देवतार्चनम् । प्रपञ्च-
वृत्तिं परित्यज्य जीवन्मुक्तो भवेत् ।
आसनं पात्रलोपश्च संचयः शिष्यसंग्रहः ।

---

1 सदाहार for यदाहारं G6
2 कल्पत इति G6, M
3 त्यजेदेकान्न G6
4 लेपन missing in Gc  अशुद्धि for अशुद्ध Ta, b, Gc, D4  क्षौरम् for क्षारम् Ta, b
5 पात्र missing in Ga  °मिवोष्णोदक cr conj (p २००, l 2), °मिव मित्राल्हादकर G6, °मिव मित्राल्हादक others
6 स्पृहा Tb
8 स्थान for स्थल Ta
11 शिष्यसंग्रह Ga, variant of Tb, others शिष्यसंचय.

दिवास्वापो वृथालापो यतेर्बन्धकराणि षट् ॥
वर्षाभ्योऽन्यत्र यत्स्थानमासनं तदुदाहृतम् ॥
उक्तालाब्वादिपात्राणामलाभेऽन्यपरिग्रहः ।
यतेः संव्यवहाराय पात्रलोपः स उच्यते ॥
गृहीतस्य तु दण्डादेर्द्वितीयस्य परिग्रहः ।
कालान्तरोपभोगार्थं संचयः परिकीर्तितः ॥
शुश्रूषालाभपूजार्थं यशोऽर्थं वा परिग्रहः ।
शिष्याणां न तु कारुण्याच्छिष्यसंग्रह ईरितः ॥
विद्या दिवा प्रकाशत्वादविद्या रात्रिरुच्यते ।
विद्याभ्यासे प्रमादो यः स दिवास्वाप उच्यते ॥
आध्यात्मिकीं कथां मुक्त्वा भिक्षावार्तां विना तथा ।
अनुग्रहं परिप्रश्नं वृथाजल्पोऽन्य उच्यते ॥

---

3 अलाभेऽन्यपरिग्रह G6, M, Bk, एकस्यापि न सग्रह Ta, var ant of Tb, एकस्यापि च सग्रह G1, एकस्यापीह समह, others

4 सव्यव° Ta, Gb, D4, सव्यव° others °हारार्थ for °हा-राय Tb text, G6, D4, M

9 दिन for दिवा Vis p १००

12 पथिप्रश्न Vis p १०५ वृथाजल्पास्य G6

एकान्नं मदमात्सर्यं गन्धपुष्पविभूषणम् ।
ताम्बूलाभ्यञ्जने क्रीडा भोगाकाङ्क्षा रसायनम् ॥
कत्थनं कुत्सनं स्वस्ति ज्योतिषं क्रयविक्रयम् ।
क्रिया कर्मविवादश्च गुरुवाक्यविलङ्घनम् ॥
संधिश्च विग्रहो यानं मञ्चकं शुक्लवस्त्रकम् ।
शुक्रोत्सर्गो दिवास्वपो भिक्षाधारस्तु तैजसम् ॥
विषं चैवायुधं बीजं हिंसा चेक्षादिमैथुनम् ।
त्यक्तं संन्यासयोगेन गृहधर्मादिकं व्रतम् ॥
गोत्रादिचरणं सर्वं पितृमातृकुलं धनम् ।
प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः ॥
सुजीर्णोऽपि सुजीर्णासु विद्वान्स्त्रीषु न विश्वसेत् ।
सुजीर्णास्वपि कन्थासु सज्जते जीर्णमम्बरम् ॥

---

1 गन्ध for गन्ध Gc  पुष्य for पुष्प D4

2 °भ्यङ्गने G1

3 ज्योतिष *ex conj* (Visv p १०६ and १०७), ज्योतिश्च all

7 Pada° *ex conj* (Visv p १०६), हिंसा (so) तैक्ष्ण्य च मैथुनम् all

8 त्यक्ता for त्यक्त Gc  गृहकर्मादिक G6, ग्राहधर्मादिक Tb

12 जीर्णमद्भुत G6

स्थावरं जङ्गमं बीजं तैजसं विषमायुधम् ।
षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥
नैवाददीत पाथेयं यतिः किंचिदनापदि ।
पक्कमापत्सु गृह्णीयाद्यावदन्नं न लभ्यते ॥
नीरुजश्च युवा चैव भिक्षुर्नावसथे वसेत् ।
परार्थं न प्रतिग्राह्यं, न दद्याच्च कथंचन ॥
दैन्यभावात्तु भूतानां सौभगाय यतिश्चरेत् ।
पक्कं वा यदि वापक्कं याचमानो व्रजेदधः ॥
अन्नदानपरो भिक्षुर्वस्त्रादीनां प्रतिग्रही ।
आविकं वानाविकं वा तथा पट्टपटानपि ॥
प्रतिगृह्य यतिश्चैतान्पतत्येव न संशयः ।

---

3. किंचन नापदि M

4 यावदन्नोपपद्यते Ta, यावदन्नोपभुज्यते Gc, variant of Tb; यावदन्नं न लिप्यते Tb text; यदन्नं नोपलभ्यते Gb, M, यदन्नं नोपभुज्यते G6; यावदह्नोपभुज्यते Visv. p १०७.

7. संविभागं for सौभगाय Visv. p. १०७.

8 यत्नपक्कं वा for यदि वापक्कं Ga, variant of Tb.

9. अन्नपानपरो Ga, Bक; अन्नपारपरो G6. प्रतिग्रहे Tb.

10. पट्ट for पट्ट all save Ta (?), Tb, B. °पटानपि Tb.

अद्वैतं नावमाश्रित्य जीवन्मुक्तत्वमाप्नुयात् ॥
वाग्दण्डे मौनमातिष्ठेत्कायदण्डे त्वभोजनम् ।
मानसे तु कृते दण्डे प्राणायामो विधीयते ॥
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥
रथ्यायां बहुवस्त्राणि भिक्षा सर्वत्र लभ्यते ।
भूमिः शय्यास्ति विस्तीर्णा यतयः केन दुःखिताः ॥
प्रपञ्चमखिलं यस्तु ज्ञानाग्नौ जुहुयाद्यतिः ।
आत्मन्यग्नीन्समारोप्य सोऽग्निहोत्री महायतिः ॥
प्रवृत्तिर्द्विविधा प्रोक्ता मार्जारी चैव वानरी ।
ज्ञानाभ्यासवतामोतुर्वानरी भाक्तमेव च ॥
नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥

1 यानम् for नावम् G6, भावम् D4

9 आत्मनोऽग्नि G6, आत्मन्याग्निं Tb

11. ज्ञानाभ्यासवतो मोत्तुः G7 हि for च Gc

12 नान्यायेन च पृच्छत M

13 लोक आचरेत् G7 (cf Manu II, 110), लोकमाचरेत् others

सर्वेषामेव पापानां संघाते समुपस्थिते ।
तारं द्वादशसाहस्रमभ्यसेच्छेदनं हि तत् ॥
यस्तु द्वादशसाहस्रं प्रणवं जपतेऽन्वहम् ।
तस्य द्वादशभिर्मासैः परं ब्रह्म प्रकाशते ॥
इत्युपनिषत् ॥

इति द्वितीयोऽध्यायः ॥

ॐ । आप्यायन्त्विति शान्तिः ।

संन्यासोपनिषत्समाप्ता ॥

---

1. लोकानां for पापानां G6  संघाते Tb text, D1.

4. अस्य for तस्य Ta

4-5 प्रकाशत इत्युपनिषत् Tb, Gc, M.

6. इति द्वितीयोऽध्यायः missing in Tb, Gc; इति संन्यासोपनिषदि द्वितीयोऽध्यायः । G6, M.

7. No Śānti in Tb, G6.

# अथ
# परमहंसपरिव्राजकोपनिषत्

ॐ । भद्रं कर्णेभिरिति शान्तिः ॥

ॐ । अथ पितामहः स्वपितरमादिनारायण-
मुपसमेत्य प्रणम्य पप्रच्छ । भगवन् त्वन्मुखाद्व-
र्णाश्रमधर्मक्रमं सर्वं श्रुतं विदितमवगतम् ।
इदानीं परमहंसपरिव्राजकलक्षणं वेदितुमिच्छामि ।
कः परिव्रजनाधिकारी कीदृशं परिव्राजकलक्षणं
कः परमहंसः परिव्रजकत्वं कथं तत्सर्वं मे ब्रू-
हीति । स होवाच भगवानादिनारायणः ।

सद्गुरुसमीपे सकलविद्यापरिश्रमज्ञो भूत्वा वि-

---

3 Before the Santi Tb and B have the Sloka परिव्राज्य-
धर्मवन्तो यज्ज्ञानाद्ब्रह्मता ययु । तद्ब्रह्म प्रणवैकार्थं (°र्थं Tb) तुर्यतुर्यंहरि
भजे ॥

8 परिव्राजनाधिकारी Ta, g

द्वान्सर्वमैहिकामुष्मिकसुखश्रमं ज्ञात्वैषणात्रयवास-
नात्रयममत्वाहंकारादिकं वमनान्नमिव हेयमुपगम्य
मोक्षमार्गैकसाधनो ब्रह्मचर्यं समाप्य गृही भवे-
द्गृहाद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्या-
देव प्रव्रजेद्गृहाद्वा वनाद्वा । अथ पुनरव्रती वा
व्रती वा स्नातको वास्नातको वोत्पन्नाग्निरनग्निको
वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् । इति बुद्ध्वा
सर्वसंसारेषु विरक्तो ब्रह्मचारी गृही वानप्रस्थो वा
पितरं मातरं कलत्रं पुत्रमाप्तबन्धुवर्गं तदभावे
शिष्यं सहवासिनं वानुमोदयित्वा [प्रव्रजेत्] ।
तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति । तदु तथा न
कुर्यात् । आग्नेयीमेव कुर्यात् । अग्निर्हि प्राणः ।

---

1 ज्ञात्वा एषणा° D4 ज्ञात्वा ईषना° G1, ज्ञात्वैषणा° M

2 मत्वा for अमत्वा Tb वान्तान्नमिव M हेयमधिगम्य G6, M, B

6 उत्पन्नाग्नि *a conj* (Jab Up), उत्सन्नाग्नि all

7 विरज्येत् G6, M बुद्ध्या D4

10 चानुमोदयित्वा Tb प्रव्रजेत् added *a conj*

11 तद्देके Tb

12 आग्नेयीमेव *a conj* (Jab Up), आग्नेयामेव all

प्राणमेवैतया करोति । त्रैधातवीयामेव कुर्यात् । एत एव त्रयो धातवो यदुत सत्त्वं रजस्तम इति ।

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥

इत्यनेन मन्त्रेणाग्निमाजिघ्रेत् । एष वा अग्नेर्योनिर्यः प्राणः, प्राणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेवैतदाह ।

ग्रामाच्छ्रोत्रियागारादग्निमाहृत्य स्वविध्युक्तक्रमेण पूर्ववदग्निमाजिघ्रेत् । यद्यातुरो वाग्निं न विन्देदप्सु जुहुयात् । आपो वै सर्वा देवताः, सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वोद्धृत्य प्राश्नीयात्साज्यं हविरनामयम् । एष विधिर्वीराध्वाने वानाशके वापां प्रवेशे वाग्निप्रवेशे वा महाप्रस्थाने

---

1. त्रैधा तदीयामेव G6, M, त्रैधा तदीयामेव Tb, B
2. एत एव (c conj) (Jab Up); एतयैव all
10. यदातुरे Ta, यद्यातुरे Tb, Ga, g.
13. वीरोध्वाने Ga, g, M.
14. वा सांप्रवेशे for वापां प्रवेशे G6, M; वा संप्रवेशे B.

कमभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते सखा मा गोपायौजः सखा योऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेत्यनेन मन्त्रेण प्रणवपूर्वकं सलक्षणं वैणवं दण्डं कटिसूत्रं कौपीनं कमण्डलुं विवर्णवस्त्रमेकं परिगृह्य, सद्गुरुमुपगम्य नत्वा, गुरुमुखात्तत्त्वमसीति महावाक्यं प्रणवपूर्वकमुपलभ्य, अथ जीर्णवस्त्रवल्कलाजिनं धृत्वा, अथ जलावतरणमूर्ध्वगमनमेकभिक्षां परित्यज्य, त्रिकालस्नानमाचरन्, वेदान्तश्रवणपूर्वकं प्रणवानुष्ठानं कुर्वन्, ब्रह्ममार्गे सम्यक्संपन्नः, स्वाभिमतमात्मनि गोपयित्वा, निर्ममोऽध्यात्मनिष्ठः, काम-

2 गोपायौज *ex conj.*, गोपायोज all

3 पाप निवारय G6, M

4 सलक्षणवेणव G6 वैणवदण्ड G1, g

5 विवर्ण T1

6 No महा in G6, M

8 एकभिक्ष्या D4

9 ˚काल स्नानम् G6 No पूर्वक T1

10 ब्रह्ममार्गेण for ब्रह्ममार्गे D4

11 गोपयित्वा all (read गोपायित्वा?)

क्रोधलोभमोहमदमात्सर्यदम्भदर्पाहंकारासूयागर्वे-च्छाद्वेषहर्षामर्षममत्वादींश्च हित्वा, ज्ञानवैराग्ययुक्तो वित्तस्त्रीपराङ्मुखः शुद्धमानसः सर्वोपनिषदर्थमालोच्य, ब्रह्मचर्यापरिग्रहाहिंसासत्यं यत्नेन रक्षञ्जितेन्द्रियो, बहिरन्तःस्नेहवर्जितः, शरीरसंधारणार्थमेव चतुर्षु वर्णेष्वभिशस्तपतितवर्जितेषु शुचिरद्रोही भैक्षान्नो ब्रह्मभूयाय भवति । सर्वेषु कालेषु लाभालाभौ समौ कृत्वा, करपात्रमाधूकरेणान्नमश्नन्, मेदोवृद्धिमकुर्वन्, कृशो भूत्वा, ब्रह्माहमस्मीति भावयन्, गुर्वर्थं ग्राममुपेत्य, ध्रुवशी-

---

3. विरक्तः स्त्री° Ga.

3—4. आलोक्य Tb.

4. °सत्यं च यत्नेन Tb. रक्षन् B; others रक्षयन्.

5. विवर्जितः for वर्जितः Ga. °संधारणार्थमेव *ex conj.*; °संधारणार्थं वा all.

6. अभिशप्त M; अभिशस्ति G6. शुचिरद्रोही DJ only; पशुरद्रोही others (°द्रोहो Ta).

7 भैक्षान्नो *ex conj.* (Jāb. Up.); texts have भैक्षमाणो.

8. कृत्वा *ex conj.*; भूत्वा all.

लोऽष्टौ मासानेकाकी चरेद्, द्वावेव वाचरेत् ।

यदालंबुद्धिर्भवेत्तदा कुटीचको वा बहूदको वा हंसो वा परमहंसो वा तत्तन्मन्त्रपूर्वकं कटिसूत्रं कौपीनं दण्डं कमण्डलुं सर्वमप्सु विसृज्याथ जातरूपधरश्चरेत् । ग्राम एकरात्रं तीर्थे त्रिरात्रं पत्तने पञ्चरात्रं क्षेत्रे सप्तरात्रमनिकेतः स्थिरमतिरनग्निसेवी निर्विकारो नियमानियममुत्सृज्य प्राणसंधारणार्थमनियमेन लाभालाभौ समौ कृत्वा गोवृत्त्या भैक्षमाचरन्नुदकस्थलकमण्डलुरबाधकरहस्यस्थलवासो न पुनर्लाभालाभरतः शुभाशुभकर्मनिर्मूलनपरः सर्वत्र भूतलशयनः क्षौरकर्मपरित्यक्तो

---

1 मासानेकाकी *ex conj* , मास्येकाकी all

5 तीरे for तीर्थे G6, M

8 अनियमेन *ex conj* (p २४१, l 5), अयमेव all कृत्वा *ex conj* , भूत्वा all

9 भैक्ष्यम् D4 उदरस्थल G6 असाधक for अबाधक Ta

11. भूतलशयनमक्षौर कर्म° G6, M , भूतलशयनोऽक्षौरकर्म° Tb, भूतलशयन. क्षौरं कर्म° Bk परित्यक्ते Ga

शुक्तचातुर्मास्यव्रतनियमः शुक्लध्यानपरायणोऽर्थस्त्री-पुरपराङ्मुखोऽनुन्मत्तोऽप्युन्मत्तवदाचरन्नव्यक्तलिङ्गो ऽव्यक्ताचारो दिवानक्तं समत्वेनास्वप्नः स्वरूपानु-संधानब्रह्मप्रणवध्यानमार्गेणावहितः संन्यासेन देह-त्यागं करोति स परमहंसपरिव्राजको भवति ।

भगवन् ब्रह्मप्रणवः कीदृश इति ब्रह्मा पृच्छ-ति । स होवाच नारायणः । ब्रह्मप्रणवः षोड-शमात्रात्मकः सोऽवस्थाचतुष्टयचतुष्टयगोचरः । जा-ग्रदवस्थायां जाग्रदादिचतस्रोऽवस्थाः स्वप्ने स्वप्ना-दिचतस्रोऽवस्थाः सुषुप्तौ सुषुप्त्यादिचतस्रोऽवस्था-स्तुरीये तुरीयादिचतस्रोऽवस्था भवन्तीति । जा-

---

1. मुक्त for युक्त Ta-b, Ga, D4. No मत in Ta.

2. No पुर in G6. ऽनुन्मत्तोन्मत्तवद् Ta, G6, D4; ऽनुन्मत्त उन्मत्तवद् Ga.

3. दिवानक्तं समत्वेनास्वप्नः Tb, Ga; दिवा नक्तमपि वास्वप्नः G6, M, Bk; दिवानक्तसमत्वेनास्वप्नः others.

4. °संधानो ब्रह्मप्रणव° Tb.

6. ब्रह्मप्रणवस्वरूपः कीदृश G6.

8. चतुष्टय° missing in Tb.

11. No इति in G6.

ग्रदवस्थायां विश्वस्य चातुर्विध्यं विश्वविश्वो विश्वतैजसो विश्वप्राज्ञो विश्वतुरीय इति । स्वप्नावस्थायां तैजसस्य चातुर्विध्यं तैजसविश्वस्तैजसतैजसस्तैजसप्राज्ञस्तैजसतुरीय इति । सुषुप्त्यवस्थायां प्राज्ञस्य चातुर्विध्यं प्राज्ञविश्वः प्राज्ञतैजसः प्राज्ञप्राज्ञः प्राज्ञतुरीय इति । तुरीयावस्थायां तुरीयस्य चातुर्विध्यं तुरीयविश्वस्तुरीयतैजसस्तुरीयप्राज्ञस्तुरीयतुरीय इति । ते क्रमेण षोडशमात्रारूढाः । अकारे जाग्रद्विश्व उकारे जाग्रत्तैजसो मकारे जाग्रत्प्राज्ञ अर्धमात्रायां जाग्रत्तुरीयो बिन्दौ स्वप्नविश्वो नादे स्वप्नतैजसः कलायां स्वप्नप्राज्ञः कलातीते स्वप्नतुरीयः शान्तौ सुषुप्तविश्वः शान्त्यतीते सुषुप्ततैजस उन्मन्यां सुषुप्तप्राज्ञो मनोन्मन्यां सुषुप्ततुरीयः पुर्यां तुरीयविश्वो मध्यमायां तुरीयतैजसः पश्यन्त्यां तुरीयप्राज्ञः परायां तुरीय-

---

7. चातुर्विध्यं च तुरीय° G6, M.

12. कलातीते all (read कलातीतायां ? *cf.* p. २०८, l. 7).

12—13. शान्त्यतीते all (read शान्त्यतीतायां ? *cf.* p. २०८, l. 8).

तुरीयः । जाग्रन्मात्राचतुष्टयमकारांशं स्वप्नमात्राचतुष्टयमुकारांशं सुषुप्तिमात्राचतुष्टयं मकारांशं तुरीयमात्राचतुष्टयमर्धमात्रांशम् । अयमेव ब्रह्मप्रणवः । स परमहंसतुरीयातीतावधूतैरुपास्यः । तेनैव ब्रह्म प्रकाशते । तेन विदेहमुक्तिः ।

भगवन् कथमयज्ञोपवीत्यशिखी सर्वकर्मपरित्यक्तः कथं ब्रह्मनिष्ठापरः कथं ब्राह्मण इति ब्रह्मा पृच्छति । स होवाच विष्णुः । भो भोऽर्भक यस्यास्त्यद्वैतमात्मज्ञानं तदेव यज्ञोपवीतम् । तस्य ध्याननिष्ठैव शिखा । तत्कर्म पवित्रम् । स सर्वकर्मकृत्स ब्राह्मणः स ब्रह्मनिष्ठापरः स देवः स ऋषिः स श्रेष्ठः स एव सर्वज्येष्ठः स एव जगद्गुरुः स एवाहं विद्धि । लोके परमहंसपरिव्राज-

---

1—3. °कारांशः for °कारांशं Ga (four times).

8. भोऽर्भक्त all (read भो अर्भक ?).

10. ज्ञाननिष्ठैव Ga. पवित्रं G6 ; others सपवित्रं.

11. सर्वदेवः for देवः G6.

12—13. सर्वजगद्गुरुः for जगद्गुरुः G6.

को दुर्लभतरः । यद्येकोऽस्ति स एव नित्यपूतः स एव वेदपुरुषः । महापुरुषो यस्तच्चित्तं मय्येवावतिष्ठते । अहं च तस्मिन्नेवावस्थितः । स एव नित्यतृप्तः स शीतोष्णसुखदुःखमानावमानवर्जितः स निन्दामर्षसहिष्णुः स षडूर्मिवर्जितः षड्भावविकारशून्यः स ज्येष्ठाज्येष्ठव्यवधानरहितः स स्वव्यतिरेकेण नान्यद्रष्टा, आशाम्बरो ननमस्कारो नस्वाहाकारो नस्वधाकारश्च न विसर्जनपरो निन्दास्तुतिव्यतिरिक्तो न मन्त्रतन्त्रोपासको देवान्तरध्यानशून्यो लक्ष्यालक्ष्यनिवर्तकः सर्वोपरतः । स सच्चिदानन्दाद्वयचिद्घनः । संपूर्णानन्दैकबोधो ब्रह्मैवाहमस्मीत्यनवरतं ब्रह्मप्रणवानुसंधानेन यः

---

5 निन्दामर्पासहिष्णु. Tb, G6, M No स² in D4

9—10 देवतान्तर° Ta-b, D4

10 °निर्वर्तक: Ta-b, G6, M

11. Tb, G6, M, D4 omit स स पूर्णा° Tb, G6, M, D4 संपूर्णानन्दैकरसो यो ब्रह्मै° Ta

12 ब्रह्म चाहम् for ब्रह्मैवाहम् G6

कृतकृत्यो भवति स परमहंसपरिव्राडित्युपनिषत् ॥

ॐ । भद्रं कर्णेभिरिति शान्तिः ॥

परमहंसपरिव्राजकोपनिषत्समाप्ता ॥

---

1. भवति स ह परमहंस° B.
3. No Śānti in Ta-b, Ga.

# अथ परब्रह्मोपनिषत्

ॐ । भद्रं कर्णेभिरिति शान्तिः ॥

ॐ । अथ हैनं महाशालः शौनको

[अथ खण्डो ब्रह्मोपनिषदारम्भे द्रष्टव्य ]

जीवस्य ब्रह्मत्वमापादयति सत्यम् ॥१॥ अथास्य पुरुषस्यान्तःशिखोपवीतित्वम् । ब्राह्मणस्य मुमुक्षोरन्तःशिखोपवीतधारणम् । बहिर्लक्ष्यमाणशिखायज्ञोपवीतधारणं कर्मिणो गृहस्थस्य ।

---

2 Before the Santi Th 16 B have the Sloka परब्रह्मोपनिषदि वेद्या (वेदा T 16) खण्डसुसाक्षाति । परिव्राजकहृद्गेय ( हृद्गेह Th 16) परितत्त्वैपद भजे ॥

7—8 सत्यमथास्य, etc , Ta b 16 सत्त्वमथास्य, etc others, numeral ours  8 °वीतित्वम् *e: co y* , °वीतत्वम् all †

अन्तरुपवीतलक्षणं तु बहिस्तन्तुवदव्यक्तमन्तस्तत्त्वमेलनम् ।

न सन्नासन्न सदसद्भिन्नमभिन्नं न चोभयम् ।
न सभागं न निर्भागं न चाप्युभयरूपकम् ।
ब्रह्मात्मैकत्वविज्ञानाद्धेयं मिथ्यात्वकारणादिति ॥

पञ्चपादब्रह्मणो न किंचन । चतुष्पादन्तर्वर्तिनोऽन्तर्जीवब्रह्मणश्चत्वारि स्थानानि । नाभिहृदयकण्ठमूर्धसु जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाः, आहवनीयगार्हपत्यदक्षिणसभ्याग्निषु । जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तुरीयमक्षरं चिन्मयम् । तस्माच्चतुरवस्था चतुरङ्गुलवेष्टनमिव षण्णवतितत्त्वानि

---

3 भिन्नमभिन्नं *ci conj* ; भिन्नाभिन्नं all

5 °विज्ञानाद्धेयं M only , °विज्ञानाहेयं Gc ; °विज्ञानसायं T16; °विज्ञानहेयं others. मिथ्यात्म° Ta-b-16, Ga, d.

7. नाभिर्हृदय° Tb-16, Gc

8 मूर्ध्निषु for मूर्धसु Tb-16, d (read मूर्ध्नि ?).

9. दक्षिण Ga, B ; दक्षिणाग्नि Gc ; दक्षिणा others

10—11. तस्माच्चतुरवस्थासु चतुर° Tb, Gc, d ; तस्माच्चतुरवस्थानचतुर° Ta : तस्माच्चतुरवस्थानाच्चतुर° Ga

11. अङ्गुलि for अङ्गुल T16. Ta omits तत्त्वानि.

तन्तुवद्विभज्य, तदाहितं त्रिगुणीकृत्य द्वात्रिंशत्तत्त्वनिष्कर्षमापाद्य, ज्ञानपूतं त्रिगुणस्वरूपं त्रिमूर्तित्वं पृथग्विज्ञाय, नवब्रह्माख्यनवगुणोपेतं ज्ञात्वा, नवमानमितं [त्रिः] पुनस्त्रिगुणीकृत्य सूर्येन्द्वग्निकलास्वरूपत्वेनैकीकृत्य, आद्यन्तयोरेकत्वमपि मध्ये त्रिरावर्त्य ब्रह्मविष्णुमहेश्वरत्वमनुसंधाय, आद्यन्तमेकीकृत्य चिद्ग्रन्थावद्वैतग्रन्थिं कृत्वा, नाभ्यादिब्रह्मबिलप्रमाणं पृथक्पृथक्सप्तविंशतितत्त्वसंबन्धं त्रिगुणोपेतं त्रिमूर्तिलक्षणलक्षितमप्येकत्वमापाद्य, वामांसादिदक्षिणकट्यन्तं विभाव्य, आद्यन्तग्रहसंमेलनमेवं ज्ञात्वा मूलमेकं, 'सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव

---

2. ध्यानपूतं Ga.

4. °मितं त्रिः Ta only; °मितस्त्रिः others.†

5. °स्वरूपत्वेनैकीकृत्य Tb. आद्यन्तयोरेक° *ex conj.*; आद्यन्तरेक° all.

6. अनुसंध्यायाद्यन्तमे° Ga; अनुसंधायाद्यन्तमे° d.

11. एवं *ex conj.*; एकं all (missing in Gc). सर्वं *ex conj.*; सत्त्वं Tb-16, d; सत्यं others.

तत्सूत्रं धारयेद्योगी योगविद्ब्राह्मणो यतिः ॥
बहिःसूत्रं त्यजेद्विप्रो योगविज्ज्ञानतत्परः ।
ब्रह्मभावमयं सूत्रं धारयेद्यः स मुक्तिभाक् ।
नाशुचित्वं न चोच्छिष्टं तस्य सूत्रस्य धारणात् ॥
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते तु सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमीरितम् ॥
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥
कर्मण्यधिकृता ये तु वैदिके लौकिकेऽपि वा ।
तैर्भिर्धार्यमिदं सूत्रं क्रियाङ्गं तन्तुनिर्मितम् ॥

---

2 Pada' ज्ञानविज्ञ नतत्पर Ga

3 ब्रह्मभावमिद B

4 सत्यसूत्रस्य Tb

6 ते *(r conj* , ये all

12 This HSI is not given here in our texts but below after धारयेत्सुधी (p २५५, l 5), *cf*, however, Brahma Up, above p ८७, l 1—5

ब्राह्मणाभासमात्रेण जीवन्ते कुक्षिपूरकाः ।
व्रजन्ते निरयं ते तु जन्म जन्मनि जन्मनि ॥
वामांसदक्षकट्यन्तं ब्रह्मसूत्रं तु सव्यतः ।
अन्तर्बहिरिवात्यर्थं तत्त्वतन्तुसमन्वितम् ।
नाभ्यादिब्रह्मरन्ध्रान्तप्रमाणं धारयेत्सुधीः ॥
शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य नेतरेषां तु किंचन ॥
इदं यज्ञोपवीतं तु परमं यत्परायणम् ।
विद्वान्यज्ञोपवीती स धारयेद्यः स मुक्तिभाक् ॥
बहिरन्तश्चोपवीती विप्रः संन्यस्तुमर्हति ।
एकयज्ञोपवीती तु नैव संन्यस्तुमर्हति ॥
तस्मात्सर्वप्रयत्नेन मोक्षापेक्षी भवेद्यतिः ।
बहिःसूत्रं परित्यज्य स्वान्तःसूत्रं तु धारयेत् ॥

बहिष्प्रपञ्चशिखोपवीतित्वमनादृत्य प्रणवहंस-

---

2. जतुर्जन्मनि B.

5. °रन्ध्रान्तप्रमाणं *ex conj.*; °रन्ध्रान्तं प्रमाणं all.

7. न for तु Ta-b, Ga.

14. बहिष्प्रपञ्च° *ex conj.*; बहिःप्रपञ्च° all.

शिखोपवीतित्वमवलम्ब्य मोक्षसाधनं कुर्यादित्याह भगवाञ्शौनकः । इत्युपनिषत् ॥ ३ ॥

ॐ । भद्रं कर्णेभिरिति शान्तिः ॥

परब्रह्मोपनिषत्समाप्ता ॥

---

2. Numeral ours

3. No Santi in Ta, Ga, d.

# अथावधूतोपनिषत्

ॐ । सह नाववत्विति शान्तिः ॥

अथ ह साङ्कृतिर्भगवन्तमवधूतं दत्तात्रेयं परिसमेत्य पप्रच्छ । भगवन् कोऽवधूतस्तस्य का स्थितिः किं लक्ष्म किं संसरणमिति । तं होवाच भगवान्दत्तात्रेयः परमकारुणिकः ।

---

1—3. Beginning of Ga : अथ याजुषी अवधूतोपनिषत् सभाष्या। ७९ । सह etc.; of T20 (damaged) : सह नाववतु——आप्यायन्तु ते मयि——शान्तिः । अथ ह etc. Before the S'anti Tb and B have the S'loka : गौणमुख्यावधूतालिहृदयाम्बुजवर्ति यत् । तत् त्रैपदं ब्रह्मतत्त्वं स्वमात्रमवशिष्यते ॥.

3. अथ हंसाकृतिः Tb ; अथ ह शाङ्कृतिः T20.

4. कस्य for तस्य T20.

5. लक्षणं for लक्ष्म T20 ; कर्म Tb.

6. भगवो for भगवान् B, d ; तत्रभगवो T20.

अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् ।
तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥
यो विलङ्घ्याश्रमान्वर्णानात्मन्येव स्थितः सदा ।
अतिवर्णाश्रमी योगी अवधूतः स कथ्यते ॥
तस्य प्रियं शिरः कृत्वा मोदो दक्षिणपक्षकः ।
प्रमोद उत्तरः पक्ष आनन्दो गोष्पदायते ॥
गोवालसदृशं शीर्षे नापि मध्ये न चाप्यधः ।
ब्रह्म पुच्छं प्रतिष्ठेति पुच्छाकारेण कारयेत् ।
एवं चतुष्पथं कृत्वा ते यान्ति परमां गतिम् ॥

न कर्मणा न प्रजया धनेन
त्यागेनैके अमृतत्वमानशुः ॥

स्वैरं स्वैरविहरणं तत्संसरणम् । साम्बरो वा दिगम्बरो वा । न तस्य धर्माधर्मौ न मेध्या-

---

3. यो विलम्ब्या॰ Ga.

7. गोवालसदृशं Tb, Ga, M; गोपालसदृशं others. शीर्षे नालमध्ये T20. चाप्यथः Tb.

12—13. साम्बरो वा दिगम्बरो वा T20 only; साम्बरा वा दिगम्बरा वा others.

13. तस्य T20 only; तेषां others.

मेध्ये । सदा सांग्रहण्येष्ट्याश्वमेधमन्तर्यागं यजते । स महामखो महायागः । कृत्स्नमेतच्चित्रं कर्म स्वैरं न विगायेत् । तन्महाव्रतम् । न स मूढवल्लिप्यते ।

यथा रविः सर्वरसान्प्रभुङ्क्ते
हुताशनश्चापि हि सर्वभक्षः ।
तथैव योगी विषयान्प्रभुङ्क्ते
न लिप्यते पुण्यपापैश्च शुद्धः ॥
आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।

---

13 (p ३०४)—1 मेध्यामेध्ये T20 only, मेध्यामेध्यौ others

1 °ष्ट्याश्वमेधान्तमन्तर्याग G२, M, B७

2 महायाग G२ only, महायोग others चिद्र for चित्र T20

3 स विगायत् T20 स स for न स T20

13 बन्धो for बद्धो T२, M

न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये ।
बहुकृत्यं पुरा स्यान्मे तत्सर्वमधुना कृतम् ॥
तदेव कृतकृत्यत्वं प्रतियोगिपुरःसरम् ।
[अनुसंदधदेवायमेवं तृप्यति नित्यशः ॥]
दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया ।
परमानन्दपूर्णोऽहं संसरामि किमिच्छया ॥
अनुतिष्ठन्तु कर्माणि परलोकयियासवः ।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥
व्याचक्षतां ते शास्त्राणि वेदानध्यापयन्तु वा ।

---

1 वा for वै T20 After this HSI T20 concludes य इदमधीते etc (see below)

2 ऐहिकामुष्मिकप्रात सिद्ध्यै Tb, ऐहिकामुष्मिकत्रातसिद्ध्यै d

3 मतम् for कृतम् Ta, नुतम् d

4 तदेतत् for तदेव Pañc परस्परम् for पुर सरम् Tb

5 This HSI is in Pañc only †

8 परलोकपिपासव d, परलोकधिया परे M, परलोकधियावस. with variant परलोकइयासव Tb

येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥
निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ।
द्रष्टारश्चेत्कल्पयन्तु किं मे स्यादन्यकल्पनात् ॥
गुञ्जापुञ्जादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्मानेवमहं भजे ॥
शृण्वन्त्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहम् ।
मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ॥
विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्यये ।
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥
अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम् ।
विपर्यासं चिराभ्यस्तवासनातोपकल्पते ॥
आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।

---

1. यत्र for येऽत्र Tb. ऽक्रियत्त्वः d.
3. द्रष्टारश्चेत् d. कल्पयतु Ta; कल्पयन्ति Pañc.
4. गुञ्जा° Ga.
5. °धर्मानैवमहं B.
8. निदिध्यासे किं M, Ta, d.
9. गेहात्मत्व° for देहात्मत्व° d.
11. °वासनातोऽवकल्पते Pañc.†
12. आरम्भकर्मणि Tb.

कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥

विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ।

बाधिकर्म व्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ॥

विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ।

विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥

नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ।

कृतं कृत्यं प्रापणीयं प्राप्तमित्येव नित्यशः ॥

व्यवहारो लौकिको वा शास्त्रीयो वान्यथापि वा ।

ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥

अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ।

शास्त्रीयेणैव मार्गेण वर्तेऽहं मम का क्षतिः ॥

देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ।

तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम् ॥

---

1 जर्माक्षये [illegible] (Pañc), कर्माक्षये all + सहस्रशः Tb

3 अवाधिका for बाधिकर्म Pañc Calc ed, बाधिकां Pañc Bo ed

10 कृतकृत्येऽपि B, G1, T1

11 का मम क्षतिः Pañc

13 वा तद्वन् Ta

विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ।
साक्ष्यहं किञ्चिदप्यत्र न कुर्वे नापि कारये ॥
कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ॥
धन्योऽहं धन्योऽहं नित्यं स्वात्मानमञ्जसा वेद्मि ।
धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम् ॥
धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य ।
धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥
धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किञ्चित् ।
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमद्य संपन्नम् ॥
धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके ।
धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः ॥

---

3. त्यक्तः for तृप्तः Tb. प्राप्यप्राप्ततया Ta-b, d.

4. तृप्यन्नैवं Tb; तृप्यंनेव d.

8. फलायितं Ga, d.

9. कर्तृत्वं M, Br, Ga. कश्चित् d.

10. अद्य *ex conj* (Pañc.); अत्र all.

12. Pāda[d]: धन्यो धन्यः पुनः पुनः Pañc. Calc. ed. (not Bo. ed.).

# अथ याज्ञवल्क्योपनिषत्

ॐ । पूर्णमद इति शान्तिः ॥

ॐ । अथ जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच । भगवन्संन्यासमनुब्रूहीति ।

[अयं भागो जाबालोपनिषदश्चतुर्थपञ्चमषष्ठखण्डेभ्योऽभिन्नत्वात्तत्रैव द्रष्टव्यः] . . .

. . . संन्यासेन देहत्यागं करोति स परमहंसो नामेति ॥ ३ ॥ आशाम्बरो ननमस्कारो न दारपुत्राभिलाषी

---

1. अथ शुक्लयजुर्वेदीया याज्ञवल्क्योपनिषत् M.

2. In Tb, B the Santi is preceded by संन्यासज्ञानसंपन्ना यान्ति यद्वैष्णवं पदं । तत्त्वैपद (तद्वै पदं B) ब्रह्मतत्त्वं (°तत्त्व° Tb) रामचन्द्रपदं भजे ॥

3. Numeral ours; the preceding numerals (१,२) do appear in some MSS.

लक्ष्यालक्ष्यनिवर्तकः परिव्राट् परमेश्वरो भवति ।
अत्रैते श्लोका भवन्ति ।

यो भवेत्पूर्वसंन्यासी तुल्यो वै धर्मतो यदि ।
तस्मै प्रणामः कर्तव्यो नेतराय कदाचन ॥
प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
संन्यासिनोऽपि दृश्यन्ते वेदसंदूषिताशयाः ॥
नामादिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये ।
प्रणमेत्कं तदात्मज्ञो न कार्यं कर्मणा तदा ॥
ईश्वरो जीवकलया प्रविष्टो भगवानिति ।
प्रणमेद्दण्डवद्भूमावाश्वचण्डालगोखरम् ॥
मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।

---

1 °निवर्तक (rccm), °निर्वर्तक ग्ll
3 कल्यो for तुल्यो Ta, V
6 देव for वेद Gc, Bक
7 च for चेत् 116
8 °ज्ञा for °ज्ञो Tb     तथा for तदा T16
9 जीवलोकाय Tb, V, Gc
10 भूमौ अश्व° Ta, Ga, V
11 यन्न for यन्त्र Ta     लोकेन्द्र° T16, Gc, B

स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम् ॥
त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचने ।
समालोकय रम्यं चेत् किं मुधा परिमुह्यसि ॥
मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा ।
दृष्टा यस्मिन्स्तने मुक्ताहारस्योल्लासशालिता ॥
श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥
केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥
ज्वलिता अतिदूरेऽपि सरसा अपि नीरसाः ।

---

1. शालिन्याः *ex conj.* (Yog.); °न्या Ta, Gc, V, °न्यो T16, Gc, M, B. स्त्रियाः *ex conj.* (Yog.); स्त्रियः all.

2. विलोचनम् Yog.

3. संमोह्यतरम्यं (*so*) T16.

4. °ल्लासि Ga, B, V; others °ल्लासी. उपमां T16.

5. दृष्ट्वा Tb-16, Gc. स्तने *ex conj.* (Yog.); मुने all. मुक्ताहर° Tb-16. °शालिनः Ta, V.

6. एष for एव Gc.

7. कामे for काले T16.

10. ज्वलिता T16, Ga, M; ज्वलता Ta-b, Gc, V; ज्वलन्तां B; ज्वलतां Yog.

स्त्रियो हि नरकाग्नीनामिन्धनं चारुदारुणम् ॥
कामनाम्ना किरातेन विकीर्णा मुग्धचेतसः ।
नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ॥
जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जुर्नारी बडिशपिण्डिका ॥
सर्वेषां दोषरत्नानां सुसमुद्गिकयानया ।
दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क भोगभूः ।
स्त्रियं त्यक्त्वा जगत्यक्तं जगत्यक्त्वा सुखी भवेत् ॥
अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ।
लब्धो हि गर्भपातेन प्रसवेन च बाधते ॥
जातस्य ग्रहरोगादि कुमारस्य च धूर्तता ।

2 °चेतसाम् for चेतस. Yog
4 वित्त for चित्त variant of Yog
5 बडिशलम्बका T16
6 दोषरक्तानां Gc  सुसमुज्झितथानया P1, °ज्झत° V
7. दुःखशृङ्गपथा T1
8 त्वभोगभू G1
10 अलभ्यमानतनय Ga, M
12 नर्तता for धूर्तता Ib

उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥
यूनश्च परदारादि दारिद्र्यं च कुटुम्बिनः ।
पुत्रदुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥
न पाणिपादचपलो न नेत्रचपलो यतिः ।
न च वाक्चपलश्चैव ब्रह्मभूतो जितेन्द्रियः ॥
रिपौ बद्धे स्वदेहे च समैकात्म्यं प्रपश्यतः ।
विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥
अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते ।
धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥
नमोऽस्तु मम कोपाय स्वाश्रयज्वालिने भृशम् ।
कोपिनो मम वैराग्यदायिने दोषबोधिने ॥

---

1. ह्यवि॰ for प्यवि॰ Gc. अनित्यत्वम् for अविद्यत्वम् Ta. अनुद्विग्नश्च Gc. पण्डिते ॥ ३ ॥ Tb.

2. यागश्च for यूनश्च T16.

6. युद्धे for बद्धे M; रिक्थे Ga. समैकात्म्यं all (read सदैकात्म्यं ?).

8. उपकारिणि T16. कोपकोपः M; कोपं कोपः Ta, V. भवेत् for न ते Gc.

11. कोपिनो *ex conj.*; कोप्यय Ta, V; कोपस्य others. दोषचोदिने Ga, M; दोषभेदिने Tb.

यत्र सुप्ता जना नित्यं प्रबुद्धस्तत्र संयमी ।
प्रबुद्धा यत्र ते विद्वान्सुषुप्तिं याति योगिराट् ॥
चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥
यतीनां तदुपादेयं पारहंस्यं परं पदम् ।
नातः परतरं किंचिद्विद्यते मुनिपुङ्गव ॥

इत्युपनिषत् ॥ ४ ॥

ॐ । पूर्णमद इति शान्तिः ॥

याज्ञवल्क्योपनिषत्समाप्ता ॥

---

2. विद्वन् Ta-b ; ब्रह्मन् Ga.

5. परात्परम् for परं पदम् Gc.

7. Numeral ours.

यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥

नावेदविन्मनुते तं बृहन्तं

नाब्रह्मवित्परमं प्रैति धाम ।

विष्णुक्रान्तं वासुदेवं विजानन्

विप्रो विप्रत्वं गच्छते तत्त्वदर्शी ॥

अथ ह यत्परं ब्रह्म सनातनं

ये श्रोत्रिया अकामहता अधीयुः ।

शान्तो दान्त उपरतस्तितिक्षु-

र्योऽनूचानो ह्यभिजज्ञौ समानः ।

त्यक्तैषणो ह्यनृणस्तद्विदित्वा

मौनी वसेदाश्रमे यत्र कुत्र ॥

---

4 विष्णुं क्रान्त Ta, variant of Ga

6 अथ ह Ga, Ta, M, V, others अथाह यत्परमं ब्रह्म Ta-b, V, यद्ब्रह्म परमं Yls 1, ब्रह्म परम Yls 2

7 यश्श्रोत्रिया (so) V, ये श्रोत्रियं Ta अधीय Tb

9 ह्यभिज्ञः समानः Tb, V, जिज्ञासमानः Ta, ह्यभिजिज्ञास्यमानः Yls 1, अभिजिज्ञास्यमानः Yls 2

10 त्यक्तैषणो *ex conj*, ह्यतोषणो Yls 2, त्यक्तेषणो others तद्विदित्वा Yls, तं विदित्वा others

11, Yls मौनी वसन् आश्रमे यत्र तिष्ठन्

अथाश्रमं चरमं संप्रविश्य

यथोपपत्ति पञ्चमात्रा दधानः ।

अखिलं विश्वं ब्रह्मभावं विचार्य

चरेत्पृथिव्यां विष्णुलिङ्गी निगूढः ॥

त्रिदण्डमुपवीतं च वासः कौपीनवेष्टनम् ।

शिक्यं पवित्रमित्येतद्बिभृयाद्यावदायुषम् ॥

पञ्चैतास्तु यतेर्मात्रास्ता मात्रा ब्रह्मणः श्रुताः ।

न त्यजेद्यावदुत्क्रान्तिरन्तेऽपि निखनेत्सह ॥

विष्णुलिङ्गं द्विधा प्रोक्तं व्यक्तमव्यक्तमेव च ।

---

1—5 अथाश्रमं चरमं सम्प्रविश्य स चाद्वितीयममृतं संप्रयाति । अखिलं विश्व ब्रह्मभावं विचार्य चरेत्पृथिव्या विष्णुलिङ्गी नि(च)गूढः । परमहंसस्याश्रमं संप्रविश्य यथोपपत्ति पञ्चमात्रा दधानः । तदा श्लोकौ भवतः । त्रिदण्डमुपवीतं च वास , etc , Yls.

2 यथोपपत्ति Yls, यथोपपत्तिं others पञ्चमात्रा Yls, पञ्चमात्रां others

3—4. अखिलं——निगूढः Yls, missing in others.

6. कवचम् for पवित्रम् Yls

7—1 (p. ३२४) These two Slokas are not in Yls स for ता Ta, V मात्र for मात्रा Ta, V. ब्रह्मणः Ga only, ब्रह्मणे others

8 यावदुद्भ्रान्तिः Ta, V (read यावदुत्क्रान्तेः ? cf. Speijer, Sanskrit Syntax, § 169)

तयोरेकमपि त्यक्त्वा पतत्येव न संशयः ॥

त्रिदण्डं वैष्णवं लिङ्गं विप्राणां मुक्तिसाधनम् ।

निर्वाणं सर्वधर्माणामिति वेदानुशासनम् ॥

अथ खलु सौम्य कुटीचको बहूदको हंसः परमहंस इत्येते परिव्राजकाश्चतुर्विधा भवन्ति । सर्वे एते विष्णुलिङ्गिनः शिखिनोपवीतिनः शुद्धचित्ता आत्मानमात्मना ब्रह्म भावयन्तः शुद्धचिद्रूपोपासनरता जपयमवन्तो नियमवन्तः सुशीलिनः पुण्यश्लोका भवन्ति । तदेतदृचाभ्युक्तम् ।

कुटीचको बहूदकश्चापि हंसः

परमहंस इति वृत्त्या च भिन्नाः ।

---

3. निर्माणं Yls 2, विप्राणां Ta, V1. सर्ववेदानाम् Yls 2. Yls 1 repeats इति वेदानुशासनम्

4 सोम्य Ta, M, V, also in following.

5. चतुर्धा Yls 1

6—9 Yls : सर्वे विष्णुलिङ्गधराः सदा स्वात्मानमात्मना ब्रह्मभावं भावयन्तः शुचयः स्वधर्म(सर्वधर्म)निरतास्त्रैकाल्योपासका जपशीला ध्यानशीलाः समाधिशीलाः पुण्यदेशे सुप्रसिद्ध(द्धे)तीर्थे(तिथौ) समृद्धे निःसपत्ने(त्न)वसन्तो नियमवन्तः सुशीलिनः पुण्यश्लोका भवन्ति ।

11. विभिन्नाः for च भिन्नाः V.

सर्वे एते विष्णुलिङ्गं दधाना
वृत्या व्यक्तं बहिरन्तश्च नित्यम् ॥
पञ्चयज्ञा वेदशिरःप्रविष्टाः
क्रियावन्तोऽमी ब्रह्मविद्यां [श्रयन्तः] ।
त्यक्त्वा वृक्षं वृक्षमूलं श्रितासः
संन्यस्तपुष्पा रसमेवाश्नुवानाः ।
विष्णुक्रीडा विष्णुरतयो विमुक्ता
विष्ण्वात्मका विष्णुमेवापियन्ति ॥
त्रिसंध्यं शक्तितः स्नानं तर्पणं मार्जनं तथा ।
उपस्थानं पञ्चयज्ञान्कुर्यादामरणान्तिकम् ॥
दशभिः प्रणवैः सप्तव्याहृतीभिश्चतुष्पदा ।
गायत्री जपयज्ञश्च त्रिसंध्यं शिरसा सह ॥
योगयज्ञः सदैकाग्र्यभक्त्या सेवा हरेर्गुरोः ।

---

2. युक्तं for व्यक्तं variant of Tb.

4. श्रयन्तः added *ex conj.*

11. व्याहृतीभिः Ga only; व्याहृतिभिः others.

12. जपयज्ञाश्च Tb.

13. सदैकाग्र्यं भक्त्या Tb, V. भक्ता Ta.

अहिंसा तु तपोयज्ञो वाङ्मनःकायकर्मभिः ॥
नानोपनिषदभ्यासः स्वाध्यायो यज्ञ ईरितः ।
ओमित्यात्मानमव्यग्रो ब्रह्मण्यग्नौ जुहोति यत् ॥
ज्ञानयज्ञः स विज्ञेयः सर्वयज्ञोत्तमोत्तमः ।
ज्ञानदण्डा ज्ञानशिखा ज्ञानयज्ञोपवीतिनः ॥
शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति वेदानुशासनम् ॥

अथ खलु सौम्यैते परिव्राजका यथा प्रादुर्भवन्ति तथा भवन्ति । कामक्रोधलोभमोहदम्भदर्पासूयाममत्वाहंकारादीन्निस्तीर्य मानावमानौ निन्दास्तुती च वर्जयित्वा वृक्ष इव तिष्ठेसेच्छिद्यमानो न ब्रूयात् । तदेवंविद्वांस इहैवामृता

---

2 नामोप° (i.e., कलिसतरणोप°) Ga  अभ्यासो ह्यध्यायो Ta, अभ्यासो स्वा° Tb, V  स्वाध्याये Tb

3 सम् for ओम् variant of Tb  यत् *ex conj*, सत् all

9 तथा भवन्ति missing in Ga

10 °दीन्निस्तीर्य *ex conj*, °दीस्तितीर्य all

11—12 भिद्यमानो Tb

12 तदेव *ex conj*, तथैव Tb, तदेव others

भवन्ति । तदेतदृचाभ्युक्तम् ।

बन्धुं पुत्रमनुमोदयित्वा-
नवेक्षमाणो द्वन्द्वसहः प्रशान्तः ।
प्राचीमुदीचीं वा निवर्तयंश्चरेत् ॥
पात्री दण्डी युगमात्रावलोकी
शिखी मुण्डी चोपवीती कुटुम्बी ।
यात्रामात्रं प्रतिगृह्णन्मनुष्या-
दयाचितं याचितं वोत भैक्षम् ॥
मृद्दार्वलाबूफलपर्णपात्रं
क्षीणं क्षौमं तृणं कन्था च पर्णम् ।

---

2. बन्धुं Ga, M ; others बन्धु°.

3. °वेक्ष° Ga, M ; °वेक्ष्य° others.

4. निवर्त° Tb ; निर्वर्त° others.

5. दण्ड Tb. युगमात्मावलोकी Ta, V.

8. वोथ Ta, V ; वाथ Bक.

9. °फलं Ta-b, V. पर्ण Ga, M ; पर्णी others ; Ta-b, Bक, V, variant of Ga insert तन्तु before पर्णी.

10. Before क्षीणं Ta-b, Bक, V, variant of Ga insert तथा यथा (तथायथा Tb, V) तु लब्धं. कन्था *ex conj.* ; कन्थां Ga, M, Bक ; कन्थाजिनौ Ta-b, V.

आच्छादनं स्यादहतं विमुक्तम् ॥

ऋतुसंधौ मुण्डयेन्मूर्धमात्रं

नाधो न कक्षं जातु शिखां न वापयेत् ।

चतुरो मासान्ध्रुवशीलता स्यात्

स यावत्सुप्तोऽन्तरात्मा पुरुषो विश्वरूपः ॥

अन्यानथाष्टौ पुनरुत्थितेऽस्मिन्

स्वकर्मलिप्सुर्विहरेद्वा वसेद्वा ।

देवाग्र्यगारे तरुमूले गुहायां

वसेदसङ्गोऽलक्षितशीलवृत्तः ।

अनिन्धनं ज्योतिरिवोपशान्तो

---

1 All save Ga, M add वा before विमुक्तम्. विमुक्तम Ta-b, V, others विमुक्त°

2. °न्मूर्ध° Tb text, °दूर्ध्व° Ga, M, °न्मुण्ड° others

3 न कक्षं *ex conj*, नाक्षं all

4 मासो ध्रुव° Ta-b, V, variant of Ga °शीलता V only, °शीलतः others.

7. वसेत Ta-b, M, V, variant of Ga, वसेन् Ga.

8 देवाग्र्यगारे Ga, M, Bx.

10 अनिन्धनं ज्यो° V; निरिन्धनं ज्यो° Ta; निरिन्धनज्यो° Ga, M; अनिन्धनज्यो Tb; अनिन्धनो others

न चोद्विजेदुद्वेजयेद्यत्र कुत्र ॥
आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् ॥
बाल्येनैव हि तिष्ठासेन्निर्विद्य ब्रह्मवेदनम् ।
ब्रह्मविद्यां च बाल्यं च निर्विद्य मुनिरात्मवान् ॥
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥

अथ खलु सौम्येदं पारिव्राज्यं नैष्ठिकमात्मधर्मं यो विजहाति स वीरहा भवति स ब्रह्महा भवति स भ्रूणहा भवति स महापातकी भवति । य इमां वैष्णवीं निष्ठां परित्यजति स स्तेनो भवति स गुरुतल्पगो भवति स मित्र-

---

1. उद्वेजयेद् (*i com*), उद्विजेद् all †
3 °संचरेत् Ta, V
5 नानुध्यायाद् all (so Brh. IV, 4, 21)
8 यस्य for येऽस्य Ta, M, V     स्थिता. Tb
10 सौम्येमं Ta, Gb, M, V     परिव्राज्य Ta,

ध्रुग्भवति स कृतघ्नो भवति स सर्वस्माल्लोकात्प्र-
च्युतो भवति । तदेतदृचाभ्युक्तम् ।

स्तेनः सुरापो गुरुतल्पगामी
मित्रध्रुगेते निष्कृतेर्यान्ति शुद्धिम् ।
व्यक्तमव्यक्तं वा विधृतं विष्णुलिङ्गं
त्यजन्न शुध्येदखिलेनात्मभासा ॥
त्यक्त्वा विष्णोर्लिङ्गमन्तर्बहिर्वा
यः स्वाश्रमं सेवतेऽनाश्रमं वा ।
प्रत्यापत्तिं भजते वातिमूढो
नैषां गतिः कल्पकोट्यापि दृष्टा ॥
त्यक्त्वा सर्वाश्रमान्धीरो वसेन्मोक्षाश्रमे चिरम् ।
मोक्षाश्रमात्परिभ्रष्टो न गतिस्तस्य विद्यते ॥
पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
तमारूढच्युतं विद्यादिति वेदानुशासनम् ॥

---

6 शुध्येदखिलेना° [illegible], शुध्यैरखिलैरा° Tb, शुध्येदखिलैरा° others

9 प्रत्यावृत्तिं Ga, प्रत्यावृत्या variant of same

11 परम् for चिरम् Ta, V, variant of Ga

अथ खलु सौम्येमं सनातनमात्मधर्मं वैष्णवीं निष्ठां लब्ध्वा यस्तामदूषयन्वर्तते स वशी भवति स पुण्यश्लोको भवति स लोकज्ञो भवति स वेदान्तज्ञो भवति स ब्रह्मज्ञो भवति स सर्वज्ञो भवति स स्वराड् भवति स परं ब्रह्म भगवन्तमाप्नोति स पितॄन्संबन्धिनो बान्धवान्सुहृदो मित्राणि च भवादुत्तारयति । तदेतदृचाभ्युक्तम् ।

शतं कुलानां प्रथमं बभूव
तथा पराणां त्रिशतं कुलानाम् ।
एते भवन्ति सुकृतस्य लोके
येषां कुले संन्यसतीह विद्वान् ॥

त्रिंशत्परांस्त्रिंशदपरांस्त्रिंशच्च परतः परान् ।
उत्तारयति धर्मिष्ठः परिव्राडिति वै श्रुतिः ॥
संन्यस्तमिति यो ब्रूयात्कण्ठस्थप्राणवानपि ।

---

5. सर्वस्वराड् for स्वराड् M.

9. वराणां for पराणां Tb ; कुलानां Ga, M. कुलानाम् Bक only ; समग्रम् others.

12. त्रिंशत्प° for त्रिंसदप° Ta-b.

ध्रुग्भवति स कृतघ्नो भवति स सर्वस्माल्लोकात्प्र-
च्युतो भवति । तदेतदृचाभ्युक्तम् ।

स्तेनः सुरापो गुरुतल्पगामी
मित्रध्रुगेते निष्कृतेर्यान्ति शुद्धिम् ।
व्यक्तमव्यक्तं वा विधृतं विष्णुलिङ्गं
त्यजन्न शुध्येदखिलेनात्मभासा ॥
त्यक्त्वा विष्णोर्लिङ्गमन्तर्बहिर्वा
यः स्वाश्रमं सेवतेऽनाश्रमं वा ।
प्रत्यापत्तिं भजते वातिमूढो
नैषां गतिः कल्पकोट्यापि दृष्टा ॥
त्यक्त्वा सर्वाश्रमान्धीरो वसेन्मोक्षाश्रमे चिरम् ।
मोक्षाश्रमात्परिभ्रष्टो न गतिस्तस्य विद्यते ॥
पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
तमारूढच्युतं विद्यादिति वेदानुशासनम् ॥

---

6 शुध्येदखिलेना° *G (ou)*, शुध्यैरखिलैरा° Tb, शुध्येदखिलैरा° others

9 प्रत्यावृत्ति Gr, प्रत्यावृत्या variant of same

11. परम् for चिरम् Ta, V, variant of Gr

अथ खल्ु सौम्येमं सनातनमात्मधर्मं वैष्णवीं निष्ठां लब्ध्वा यस्तामदूषयन्वर्तते स वशी भवति स पुण्यश्लोको भवति स लोकज्ञो भवति स वेदान्तज्ञो भवति स ब्रह्मज्ञो भवति स सर्वज्ञो भवति स स्वराड् भवति स परं ब्रह्म भगवन्तमाप्नोति स पितॄन्संबन्धिनो बान्धवान्सुहृदो मित्राणि च भवादुत्तारयति । तदेतदृचाभ्युक्तम् ।

शतं कुलानां प्रथमं बभूव

तथा पराणां त्रिशतं कुलानाम् ।

एते भवन्ति सुकृतस्य लोके

येषां कुले संन्यसतीह विद्वान् ॥

त्रिंशत्परांस्त्रिंशदपरांस्त्रिंशच्च परतः परान् ।

उत्तारयति धर्मिष्ठः परिव्राडिति वै श्रुतिः ॥

संन्यस्तमिति यो ब्रूयात्कण्ठस्थप्राणवानपि ।

---

5. सर्वस्वराड् for स्वराड् M.

9. वराणां for पराणां Tb; कुलानां Ga, M. कुलानाम् Ba only; समग्रम् others.

12. त्रिशत्प° for त्रिंसदप° Ta-b.

तारिताः पितरस्तेन इति वेदानुशासनम् ॥

अथ खलु सौम्येमं सनातनमात्मधर्मं वैष्णवीं निष्ठां नासमाय प्रब्रूयान्नाननूचानाय नानात्मविदे नावीतरागाय नाविशुद्धाय नानुपसन्नाय नाप्रयतमानसायेति ह स्माहुः । तदेतदृचाभ्युक्तम् ।

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मां शेवधिष्टेऽहमस्मि ।
असूयकायानृजवे शठाय
मा मा ब्रूया वीर्यवती तथा स्याम् ॥
यमेव विद्याच्छुचिमप्रमत्तं
मेधाविनं ब्रह्मचर्योपपन्नम् ।
अस्मा इमामुपसन्नाय सम्यक्

---

3 नासमाय *ex conj*, नासमाप्य all †

4. वाप्रयत॰ M.

7 शेवधिष्टे all (so Yāska II, 4, Manu II, 114, *cf.* Sāyana, Rgvedabhasya, end of Upodghāta)

9. ब्रूया Ga (so Yaska, *loc. cit*); ब्रूयाद् others

10 विद्याच्छुचिम् *ex conj* (*cf.* Manu II, 115), विद्याश्रुतम् all.

परीक्ष्य दद्याद्वैष्णवीमात्मनिष्ठाम् ॥

अध्यापिता ये गुरुं नाद्रियन्ते

विप्रा वाचा मनसा कर्मणा वा ।

यथैव ते न गुरोर्भोजनीया-

स्तथैव तान्न भुनक्ति श्रुतं तत् ॥

गुरुरेव परो धर्मो गुरुरेव परा गतिः ।

एकाक्षरप्रदातारं यो गुरुं नाभिनन्दति ।

तस्य श्रुतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।

स ब्रह्मवित्परं प्रेयादिति वेदानुशासनम् ॥

इत्युपनिषत् ॥

ॐ । पूर्णमद इति शान्तिः ॥

शाट्यायनीयोपनिषत्समाप्ता ॥

---

1 विद्यान्वैष्णवीम् Ta, दद्याद्विद्या वैष्णवीम् V

4 Texts read यथैव तेन न गुरुर्भोजनीयः, I have restored the line after Yaska, *loc cit*

5 तान्न Yaska, *loc cit*, तान्नं न Ta and variant of Tb, चान्न न others 8 तथा for तपो B

12 No Santi in Ta-b 13 शाट्यायन्योपनिषत्समाप्ता Ta

# अथावधूतोपनिषत्

ॐ । यमनियमासनप्राणायामप्रत्याहारधारणा-
ध्यानसमाध्यष्टाङ्गयोगः ।

देहेन्द्रियेषु वैराग्यं यम इत्युच्यते बुधैः ।
अनुरक्तिः परे तत्त्वे सततं नियमः स्मृतः ॥
सर्ववस्तुन्युदासीनभाव आसनमुत्तमम् ।
जगत्सर्वमिदं मिथ्या प्रतीतिः प्राणसंयमः ॥
चित्तस्यान्तर्मुखीभावः प्रत्याहारस्तु सत्तमः ।
चित्तस्य निश्चलीभावधारणां धारणां विदुः ॥

---

3. °ष्टाङ्गयोगमुच्यते d3.

4. Before this line d3 inserts: शिखा प्राणमयी वृत्तिर्यमाद्य-ष्टाङ्गसाधनम् ।.

6. सर्ववस्तून्यु° d1-2. उदासीनो for उदासीन d3. भाव *ex conj.*; भावम् all.

9. भाव *ex conj.*; भावं all. धारणां d3 only; धारणा others.

# अथावधूतोपनिषत्

ॐ । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगः ।

देहेन्द्रियेषु वैराग्यं यम इत्युच्यते बुधैः ।
अनुरक्तिः परे तत्त्वे सततं नियमः स्मृतः ॥
सर्ववस्तुन्युदासीनभाव आसनमुत्तमम् ।
जगत्सर्वमिदं मिथ्या प्रतीतिः प्राणसंयमः ॥
चित्तस्यान्तर्मुखीभावः प्रत्याहारस्तु सत्तमः ।
चित्तस्य निश्चलीभावधारणां धारणां विदुः ॥

---

3. °ष्टाङ्गयोगमुच्यते d3.

4. Before this line d3 inserts: शिला प्राणमयी वृत्तिर्यमाद्यष्टाङ्गसाधनम् ।.

6. सर्ववस्तून्यु° d1-2. उदासीनो for उदासीन d3. भाव *ex conj.*; भावम् all.

9. भाव *ex conj.*; भावं all. धारणां[1] d3 only; धारणा others.

सोऽहं चिन्मात्र एवेति चिन्तनं ध्यानमुच्यते ।
ध्यानस्य विस्मृतिः सम्यक् समाधिरभिधीयते ॥
एवं विशोध्य तत्वानि योगी निःस्पृहचेतसा ।
यथा निरिन्धनो वह्निः स्वयमेव प्रशाम्यति ॥
ग्राह्याभावेऽमनःप्राणो निश्चलज्ञानसंयुतः ।
शुद्धसत्त्वे परे लीनो जले सैन्धवपिण्डवत् ॥
मोहजालकनिर्धूतो विश्वं पश्यति स्वप्नवत् ।
सुपुप्तवद्यश्चरति स्वभावपरनिश्चलः ।
निर्वाणपदमाश्रित्य योगी कैवल्यमश्नुते ॥
योगी कैवल्यमश्नुत इति । य एवं वेद । इत्युपनिषत् ॥

अवधूतोपनिषत्समाप्ता ॥

---

1 चिन्मात्रमेवेति d3

2 विस्मृतिः all (read विस्तृतिः?)

5 ऽमन *er con]* , मन (so) all   प्राणो d3, प्राण others
निश्चलं d3

6 जले *er conj* , जला d3, जीवः d1 , जान. d2

8 सुपुप्तिवद् d3   स्वभावं d3

11 Before the colophon d3 inserts ॐ शान्तिः शान्ति. शान्ति. After the colophon d1 adds शुभं भवतु, d2 सह नाववतु Ending of d3 इत्यवधूतोपनिषत्संपूर्णमस्तु । श्रीयोगदिगम्बरार्पणमस्तु ॥

# CRITICAL NOTES.

[Of the figures at the beginning of each note the Indian one refers to the page and the Arabic one to the line on the same page, in this edition ]

२, 4 स्व or तव : It is obvious that the original cannot have contained this change, within one sentence, from the second to the third person, as found in all our texts except in one quotation, though we are, of course, at liberty to explain the third person by supplying भवान्, as does Śaṅk (*ad* परिग्रहेत् ) No Indian author, ancient or modern, with ever so little grammatical training, would think of such a construction which could only originate in a scribe's mistake (स्व, if badly written, being easily mistaken for तव) and persist through the undiscriminating belief in archaisms *Cf* also Prs Up स्वपुत्रमित्रकलत्रबन्ध्वादीन् (p ४१, l 8) Nor is Śaṅk 's explanation of तव (=आरुणेरहंममाभिमानिनः, Nar तव त्वत्संबन्धिनस्त्वदीयान्ममत्वालम्बनान्) acceptable App explains तव पुत्रादीन्सर्वान्विसृज । अन्योऽपि यः कश्चन सर्वकर्मत्यागेच्छुर्भवेत् सोऽपि पुत्रादीन् विसृजेत्, and similarly Deussen "[Verlasse] deine Söhne, Brüder, Verwandte und [Freunde],—

# CRITICAL NOTES.

[Of the figures at the beginning of each note the Indian one refers to the page and the Arabic one to the line on the same page, in this edition.]

३, 4 स्व or तव - It is obvious that the original cannot have contained this change, within one sentence, from the second to the third person, as found in all our texts except in one quotation, though we are, of course, at liberty to explain the third person by supplying भवान्, as does Sank (ad परिग्रहेत्) No Indian author, ancient or modern, with ever so little grammatical training, would think of such a construction which could only originate in a scribe's mistake (स्व, if badly written, being easily mistaken for तव) and persist through the undiscriminating belief in archaisms Cf also Phs Up स्वपुत्रमित्र-कलत्रबन्ध्वादीन् (p ४५, l 3) Nor is Sank's explanation of तव (=आरुणेरहममाभिमानिनः, Nar तव त्वत्संबन्धिनस्त्व-दीयान्ममत्वालम्बनान्) acceptable App explains तव पुत्रा-दीन्सर्वान्विसृज । अन्योऽपि यः कश्चन सर्वकर्मत्यागेच्छुश्चेद्भवेत् सो-ऽपि पुत्रादीन् विसृजेत्, and similarly Deussen "[Verlasse] deine Söhne, Brüder, Verwandte und [Freunde],—

mun lasse die Hautlocke,' etc, but this too is a rather strained interpretation

३, ४—४, 3 Madh (Bo ed p १६७) reads तव (न च one MS) पुत्रान् भ्रातृव्यनन्ध्वादीन् शिखा यज्ञोपवीत याग सूत्र स्वाध्याय च भूर्लोक भुवर्लोक स्वर्लोक महर्लोक जनोलोक तपोलोक सत्यलोक चातलपाताल (two MSS transpose पाताल to the end) वितलसुतलतलातलमहातलरसातल ब्रह्माण्ड च विसर्जयेत् ।

४, 1—3 I take all the च, except the one supported by SR, to be later intruders Had they been in the original, they would have prevented the transformation of भूर्लोक, etc, to a compound, whereas without them the omission of a single Anusvara was sufficient to bring on the change *Cf* p २०७, l 6 with foot-note, showing the rise of a compound through archaic Sandhi

४, 1 Weber thinks that यागसूत्र was originally but a marginal gloss on यज्ञोपवीत, but what Indian ever wanted that gloss? Deussen adopting the same reading, translates Das Opfer mitsamt der Schnur, but it is improbable that the thread should be mentioned twice

४, ०—१, 1 It is impossible to say with certainty which arrangement of nether worlds the original had I, therefore, thought it wisest to choose that reading which is the most frequent one and the only one found in all the three recensions, though it does not agree with the set invariably met with in later Vedanta The insertion, in NS, of an additional member, *ii*, नितल finds its explanation

in Uttara Gita II, 27 28 (26 27) where अतल, वितल, नितल, सुतल, महातल, रसातल, and तलातल are together called सप्तपाताल

५, 1 Nar अतलादीनां सप्तानां ब्रह्माण्डेन सह समाहारद्वन्द्व (similarly Sank nothing App) How can one be lieve for a moment in such a stupid compound

५, 3 two MSS of Madh (Bo ed p १६७) read ब्रह्मचारी गृहस्थो for गृहस्थो ब्रह्मचारी

५ 3—६ 2 The more important thing is said first though it comes later in time cf above गृहस्थो ब्रह्मचारी (see also Tippani)

६ 4 लोकाग्नीन्, etc, for लोकाश्च is wrong because the Kuticara has no fire to renounce, Nar's त्रिदण्डिनो वैश्वदेवाधिकारात् being a mere guess without authority

६ 6 The sentence ऊर्ध्वगमन विसृजेत् can only have crept into the text after लोकाश्च (1 4) was already corrupted to लोकानग्नीन् etc, because it means the same (according to the comm at least) as लोकान् विसृजेत्, whereas अत ऊर्ध्वम् precludes any such repetition

७ 2 I am not sure about the reading आरण्यकम् *Cf* the exclusive use of आरुणम् for उपनिषद् in Sarva siddhantasamgraha (ed by Prof Rangacarya Madras 1909)

७, 4 सूचनात् सूत्रम् may be a gloss as Weber says but it need not, on that account, be an inter polation, not even if his punctuation were right

८, 1—९, 3 It need hardly be explained why the editions etc, are wrong in transposing काम॰—

चान्यदपीह Observe especially अपि on p ८ 1 1 and the strained explanation of it given by Sank also the similar succession of ideas in Phs Up (p ४७—४८) नदण्डं नशिख । निन्दागर्वमत्सर अहंकारादींश्च हित्वा etc

८, ७ द्वावेव वाचरेत् See Tippani and Translation चरेत् alone( = व्रतं चरेत्) would also do (cf p १८६, l 7) but it cannot well have been used immediately after चरेत्=अटेत् विचरेत् in the sense of 'sojourn is a third possibility (so Oupnek hat *stationem exequi* and *stabilis (residens) fiat*), but the absence of वा in NS shows that the वि has taken its place, *i e*, that *the reading is secondary, whereas B is a mere com*promise between the two readings (tertiary) The erroneousness of the explanation चरेत्=चरेताम् (so Madh p 180 Sank Nar Deussen) is also evinced by the frequency of the warning द्वाभ्यां ग्रामं, द्वौ मिथुनम् etc

९ ७ In a quotation from Saunaka Madh (p 178) has म for मा so also two MSS in a quotation from Baudhayana ibid (p 170) — My Pandits explain सखे मा गोपाय ममौजो गोपाय सखायोऽसि (=सखासि), इन्द्रस्य वज्रोऽसि etc but they are unable to give me another instance of सखा=सखे *cf* Tippani and note in Translation

१० अथ भिक्षाचर्यं चरन्ति seems to be directly connected with both what precedes and what follows which is not quite the case with औषधवदशनमाचरेत् by which it is substituted in NN and SR *cf* the analogous position of अथ परिव्राड्, etc, and अत ऊर्ध्वम्,

etc, p. ६८, l. 3, and p. ३९, l. 3, respectively.

१०, 4—5 I take Sank.'s hint; see Tippani. The sentence is meant as a protracted exclamation called out, as it were, into the quarters of the world. रक्षतो, therefore, is a *phonetic spelling*, or representing the *o appento* not unfrequently heard in spoken Sanskrit (in the South, at least) when *a* is protracted, and even for ordinary *a*. The position of यत्नेन may be explained thus that the author had first in his mind a simple यत्नेन रक्षत, and then, with the double object of giving his exhortation greater solemnity and of indicating, in the traditional way, the closing of the chapter, replaced the last word by the fuller हे रक्षतो, etc, without caring in the least for the grammatical admissibility of his construction, grammar being to him, as to most Parivrajaka-authors, a *quantité négligeable*.

---

१५, 3—4 I am not sure about this passage. Perhaps the original had स्वस्थो वाश्रमपारं गच्छेयमिलेष पितृमेधकामो विधिवत्संभारान्संभृत्य, etc.

१६, 1. I believe that the Pandit with whom I discussed this passage is right in objecting to कल्पताम्, because then the Mantra would require a *Karman* (*upayoga*) which it is impossible to guess, whereas with कल्पते it would be simply a माहेष्टिप्रतिपादिका श्रुतिः, as it were in parentheses, after which the interrupted description is taken up again by अत ऊर्ध्वम्.

१८, 6 I accept Deussen's conjecture but divide विहितान्न उत्तरै (archaic Sandhi), *cf* संस्कारोपतिष्ठते at the beginning of the Upanishad further p ४०, l 7 असूत्रोदरपात्र Ramayana VII, 59, 3, 25 अचक्षुपोत्तम चक्षुरगते सगतिर्भवान्, *etc*, and for विहितान्न Mahabharata XII, 245, 6 अश्वस्तनविधाता स्यात् The instrumental would not be compatible with °भक्ष, and विहितात् (singular for plural or = विधे) is not to be expected here

२०, 8—9 It may appear that the two readings contradict each other, but this is not the case, because to वर्जयेत् we have, no doubt, to supply वपने

२१, 1 त्रिविष्टब्धम् Only this reading in Mahabharata XII, 322 (325), 47, (कापायधारण मौण्ड्य त्रिविष्टब्ध कमण्डलुम्) and in Baudhayana, Madh p 158

२२, 5 Nar explains दान तर्पणादि । ध्यानमिति पाठे ध्यानसाधनमाचमनीयादि । but both these explanations are too far fetched to be acceptable whereas पानं= आचमन implies nothing extraordinary My Pandits say that one can neither give nor meditate "with (or through) pure water,' and that अद्भि पूताभि cannot well refer to शौचम only, because for bathing (imagined to purify the inner man) pure water is not less but even more essential than for mere washing (शौचम्) *Cf*, however Medhatithi Yad VII भिक्षाटन जप स्नान ध्यान शौच सुरार्चनम् । कर्तव्यानि षडेतानि सर्वदा नृपदण्डवत् ॥ and Brahma Up निरुदका ध्यानमघ्या (p ५०, l 6) and for the reading दान Baudh Dharm II, 0, 18 10 भूतेभ्यो दयापूर्वं संविभज्य A metrical passage quoted by Nar (p 57) prescribes for sunrise and

noon स्नानम्, शौचम्, आचमनम्, and संध्याध्यानम्, and after the evacuation at night शौचम्, आचमनम्, and जपः.

२२, 6 The reading of NN is taken from Kths Up, end

२४, 4 I have accepted सस्थाप्य, in order to avoid a conjecture But the agreement of NS and SR (though not complete) shows that the original had something else I guess संश्राप्य or संश्राय्य (from root श्रि)

२५, 2 For परात्परमवस्थात् cf Mtri Up VI, 1 हिरण्यवस्थात् and note on it in SBE vol 15, p L

---

३१, 6 For धृणीत्वा cf Whitney, Sanskrit Grammar', § 991 d

३४, 5 Deussen's translation "mit dem Wasser als Gefasse [d h ohne Gefass]" would require either उदपात्रेण = उदरूपपात्रेण (*madhyamapadalopi karmadhāraya*), which is so open to misunderstanding that no author, in my opinion, would risk to use it, or उदपात्र (=जलस्थलकमण्डलु, p २४४, l 6), in which case we should have to discard the whole *varietas lectionis*

३८, 3—4 *Cf* also Baudh Dharm II, 10, 17, 23 वैश्वानर द्वादशकपाल निर्वपति.

४२, 1 *Cf* note on २२, 3.

---

४५, 3 For उपगम्य see Whitney, Sanskrit Grammar[2], § 992 a

४५, ७ For बाहुल्य *cf* the somewhat similar use of अवलोकन, p ५२, and मोद, p ५४, l 2 Possibly, however, the original had बहुलो which by some scribe s wisdom was corrupted to बाहुल्यो

४६, 1 The nom plur विदुषो is also used in the Mahabharata, mainly in the Vanaparvan, and the nom du विदुषौ occurs as well, see PW *sub voce* विद्वस्

४६, 3 Our Upanisad, small though it is, could not well have been composed by a man who was capable of a blunder like अह्——अवस्थीयते The commentaries, of course accept the reading, Nar explaining it by पुरुषादिव्यत्यय !

४७, 3 I regard नदण्ड नशिख, etc, as adverbs, and therefore reject the reading चेति in favour of चरति That we must not read न दण्ड न शिख, etc, is also evident from the almost exact parallelism of our passage (नदण्ड——पट्टूर्मिवर्जे) with आशाम्बरो——अनिकेतस्थिति, p ५०, l 7—p ५१, l 3

४८, 1 The passage inserted by AS, etc, before निन्दा is a secondary and wrong explanation of the "six waves' mentioned before

४८, ७ Deussen reads यत्त for एतत् (so the comm ), and he connects this with what precedes, but the place of यत्त, except in poetry, is at the beginning, not at the end of the sentence The passage षट्टूर्मिवर्जे—स्वयमेव स्थितिरिति (l 1—७) is an example of a

peculiarity of style not unfrequently met with in this early prose-literature, which I would call a chain-period (*cf* Preface) निन्द्रा—हित्वा takes up षड्रूमिवर्जं, while एतद्वपुरपध्वस्त (after which इति must be understood) refers back to स्ववपुः कुणपमिव दृश्यते, and तस्य स्वयमेव स्थितिः to तन्नित्यपूतस्थ

४९, 1—2 The three तत् in line 2 suggest the idea that the reading त शान्त of the texts and comm, which as it stands admits of no reasonable explanation, is corrupted from तञ्शान्तं = तच्छान्त, *cf* ZDMG vol 33, p 185, SBE vol 15, p xlviii, and Haug's examples in *Brahma und die Brahmanen* p 33 तञ् शम्या. and यञ् शमी The Sandhi in question need not have been confined to the Maitrayaniyas, *cf* the contraction of ॰अ + उ to ओ which is quite usual in our Upanisads (see Preface), and observe that this Upanisad is assigned to the Yajurveda, though to the White one, in the Muktika list Yet, after repeated examination, the reading सशान्त, which I rejected because it is in a careless MS, and because nowhere else, to my knowledge, ब्रह्म is called सशान्त (though, as to the meaning, this is of course hardly different from शान्त), appears to me also acceptable, mainly because of p ११९, l 2 संशान्तसर्वसंकल्पा, etc

४९, 1 For the wording and gender of the compound अद्वयानन्द-विज्ञानघन *cf* its exact equivalent पूर्णानन्द-एकबोध at the end of this Upanisad, and for its connection with what precedes *cf* Brh Up

II, 4, 12 एव वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवै तेभ्यो भूतेभ्यो समुत्थाय, etc

४९, 3 The sentence inserted by NS after च is, in my opinion, rightly rejected by Nu It looks like a corrupted marginal note

४९, 3 For एके=एकस्मिन् see Whitney, Sanskrit Grammar, § 482 b Or shall we read एकान्तविभग्न ? After विभग्न the word इति must be understood (*cf* next but one note)

५२, 1 For the necessity of our reading (Danda and new sentence) *cf* the parallelism referred to in the note on ४७, ७

५३ —७ Here we have four conditional sentences without a particle in the protasis, *cf* Speijer, Sanskrit Syntax, § 487 If we accept the reading दृष्ट च स स्पृष्ट च स प्राश्च च स, the particle would be there, all the च, also that of the fourth sentence, being then = चेद् But this च=चेद् though met with in older Sanskrit is not probable here because of the preceding चेद् in न बाधक इति चेद् The word to be supplied however, might as well be इति If, in the fourth sentence, the original reading is सर्वे कामा, etc, the beginning of the sentence must be a corruption from यस्माद्भिक्षोर्हिरण्य, etc

५३, ७ The chosen reading is not necessarily the original one, because सर्वे कामा मनोगता व्यावर्तेरन् = सर्वे कामा मनोप्रविष्टमात्रा नश्येयु (*cf* Tippani) is just as well possible though the three भवेत् before seem to point to व्यावर्तयेत्

सर्वोऽयमर्थः सम्यक्प्रदर्शितो दत्तात्रेयसंहिताया उत्तरभागे त्रिपञ्चाशेऽध्याये । यथा—

'सर्वेषामपि मर्त्यानां काञ्चनेच्छा बलीयसी ।
सदा काञ्चनमाश्रित्य तिष्ठन्त्येतापराशय ॥
तस्मात्सर्वप्रयत्नेन यतिर्मोक्षपरायण ।
कर्मणा मनसा वाचा काञ्चनेच्छां विवर्जयेत् ॥
काञ्चनेच्छा यदि स्याच्चेत् कर्मणा मनसा गिरा ।
तस्य जन्मसहस्रं स्यात् कानने कुक्कुटोद्भवम् ॥
धर्माधर्मेच्छया वापि गुरुशुश्रूषयापि वा ।
आराधनार्थं देवस्य तदीयाराधनाय च ॥
आरामोत्पादनार्थाय देवागारविशुद्धये ।
शिष्यसंग्रहणार्थाय ब्रह्मविद्याप्तये यतिः ॥
काञ्चनग्रहणं धीमान् मनसापि न चिन्तयेत् ।
चिन्तयेद्यदि मोहेन बकजन्मसहस्रभाक् ॥
तस्मात्सर्वप्रयत्नेन यतिः काञ्चनलोष्ठपम् ।
नमस्कृत्य गृही भूय. सवासा जलमाविशेत् ॥ इति ।

५३, ५. सर्वानित्यादि । 'पुत्रभार्यादिकामानां हिरण्यमूलत्वादिति भाव.' इति ना० । मनोगतान् मनःप्रविष्टगागान् । व्यावर्तयेत् नाशयेत् नष्टशक्तीन्कुर्यादिति यावत् । यथाह दक्षः । यस्मिन्कामाः प्रविशन्ति विषयेभ्योपसंहृताः । निपयान्न पुनर्यन्ति स कैवल्याश्रमे वसेत् ॥' इति (मा०) ।

५४, १. त्यागी रागे। रागे रागविषये। ऐहिकामुष्मिकराग-परित्यागपर इति भावः। यद्वा अन्यैस्तमुद्दिश्य कृते स्नेहे ममबुद्धिः।

५४, १—२. सर्वत्रेत्यादि। 'सर्वत्र लोकद्वयेऽपि यौ शुभाशुभावनुकूलप्रतिकूलविषयौ तयोरनभिस्नेहः' इति विद्या°।

५४, २. न मोदं च। प्राप्नोतीति शेषः। 'पूजितोऽपि न मुदं व्रजेत्' इति शौनकवचनात् (या)।

४५, २—३, सर्वेषामिति। गतिः प्रवृत्तिः मनःकारितो विषयेषु सङ्गः। उपरमते उपशाम्यति।

५४, ३. सदात्मेत्यादि। सदात्मा सदात्मवान्। अथवा सदा अजस्रम् आत्मा जीवात्मा आत्मन्येव परमात्मन्येव अवतिष्ठते तिष्ठति।

५५, १. यदित्यादि। यत् ब्रह्म पूर्णानन्दैकबोधः अद्वैतानन्दविज्ञानघन एवास्ति तत् अहम् अस्मीति। अथवा। 'यत् ब्रह्म वेदान्तेषु पूर्णानन्दैकबोधः परमात्मेति निरूपितं तत् ब्रह्म अहम् अस्मि' इति विद्या।

---

अथ जाबालोपनिषट्टिप्पण्यारभ्यते।

५९, २—४. यदनु कुरुक्षेत्रं यत्कुरुक्षेत्रमनु कुरुक्षेत्रनिर्विशेषेणेत्यर्थः। ना' तु। 'यत् क्षेत्रम् अनु हीनं कुरुक्षेत्रं, कुरुक्षेत्रादपि यन्महिम्नाधिकम्। यथा हरिमनु सुरा हरेर्हीना इत्यर्थः।' इति

(रामोत्तरतापनीयदीपिकायाम्) । देवाना देवयजनमित्यादि । तदिति शेष । गृहीति । कुरुक्षेत्रस्य देवयजनत्व शतपथब्राह्मणे श्रूयते । 'देवा ह वै सत्र निषेदु । अग्निरिन्द्र सोमो मखा विष्णुर्विश्वे देवा अन्यत्रवाश्विभ्याम् । तेषा कुरुक्षेत्र देवयजनमास । तस्मादाहु कुरुक्षेत्र देवाना देवयजनमिति । तस्मायत्र क्वचन कुरुक्षेत्रस्य निगच्छति तदेव मन्यत इद देवयजनमिति तद्धि देवाना देवयजनम् ।' इति । सर्वेषा भूताना ब्रह्मसदनमिति । तदुच्यते मनुना । 'कुरुक्षेत्र च मत्स्याश्च पञ्चालाः शूरसेनका । एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तर * ॥ एतद्देशप्रसूतस्य सकाशादग्रजन्मन । स्व स्व चरित्र शिक्षेरन् पृथिव्या सर्वमानवा ॥' इति (२, १९–२०) ।

५९, ४. अविमुक्त नाम वाराणसी । इश्वरेणापरित्यक्तमित्यर्थ । अत्र न लोके प्रसिद्ध काशीनगर विवक्ष्यते किंतु द्वितीये ऽब्दे वक्ष्यमाण आत्मविदा काशीनगरस्थानीयो भ्रुवोर्घ्राणस्य च सधि । वै परमार्थत ।

५९, ५ ब्रह्मसदनम् । 'देहो देवालय प्रोक्त' इति श्रुत्यन्तरात् ।

५९, ६ तस्मादिति । 'यस्मादिदमेव क्षेत्रोत्तम तस्मात्' (ना) । यत्र क्वचन गच्छति सर्वत्र न वाराणस्यामेव केवलम् । मुमुक्षु पुरुष इति शेष । तदेव वक्ष्यमाणमेव मन्येत चिन्तयेत् इति

* 'अनन्तर निविशप इति सर्वत्रनारायण ।

यथा । अथवा 'तदेव अविमुक्तं मन्येत जानीयात् इति अनेन प्रकारेण' (शङ्क°) । इद वै इत्यादि । तदेतद्वृद्धशातातपेनाप्युक्तम् । 'निगृहीतेन्द्रियग्रामो यत्र यत्र वसेद्यति । तत्र तत्र कुरुक्षेत्रं नैमिषं पुष्करं यथा ॥' (विश्वे°) ।

६०, १ नन्वस्यान्यक्षेत्रेभ्य. को विशेषोऽत आह श्रुति अत्र हीति (ना°) ।

६०, ३. अमृतीभूत्वा ब्रह्मलोकं प्राप्यानन्तरं मोक्षी भवति ब्रह्मणा सह मुच्यते । अथवा ब्रह्मीभूय निर्वाणं गच्छतीत्यर्थ ।

६०, ८. सोऽविमुक्त उपास्य इति । अविमुक्त अविमुक्तस्थ । यद्वा अविमुक्त अव्यक्त । तथा हि । वित्तादिषु मरणादिकाले पुन पुन. परित्यज्यमानेष्वप्यात्मैव केवल न परित्यज्यते । न हि निज आत्मा केनचन क्षणमपि परित्यक्तु शक्य । इति ।

६१, २—३. वरणायामिति । 'वरणाया वरणानामिकाया नद्या नाम्या नासीनामिकाया च यो मध्यदेश ऐतिह्यप्रसिद्धस्तत्र प्रतिष्ठितोऽविमुक्त' इति ना ।

६२, १. भ्रुवोर्घ्राणस्य च य संधि । 'कूर्पस्थानमित्यर्थ । तत्र हीडापिङ्गले सगते ।' इति ना° ।

६२, १—२. द्यौर्लोकस्येत्यादि । शिरसि ब्रह्माण्डसनिवेशे कृते कूर्पादुपरि सुवरादिसत्यान्ता पञ्च लोका सन्ति तदधस्तात्तु भुवरा-

दिपातालान्ता नव । तथा च कूर्पस्थान द्यौर्लोकस्य पञ्चलोकात्मकस्य सर्गस्य परस्य अन्यस्य नवलोकात्मकस्यावरसर्गस्य च संधिर्भवतीति भाव ।

६२, २. एतत् एतस्मात् । संधिम् आरुण्याद्युपनिषदुक्तजीवपरमात्मनोरैक्यभावम् (७, ४९ पृ०) । यद्वा पूर्वोक्तं कूर्पस्थानम् । सध्या सध्यामिव ।

६२, ३—४. अविमुक्तम् अविमुक्तसवन्धि विस्मरणायोग्य वा ज्ञानमाचष्टे 'व्याचष्टे शिष्येभ्य उपदेष्टु क्षमो भवति' (ना०) ।

६२, ५. किजप्येन केन जप्येन ।

६४, १—५. अथ सन्यासकाल क इति प्रश्ने प्रथमत. क्रमसन्यासमुपन्यस्यति ब्रह्मचर्यं समाप्येत्यादिना । यथाह मनु. । 'वनेषु च विहृत्यैव तृतीय भागमायुष । चतुर्थमायुषो भाग त्यक्त्वा सङ्गान् परिव्रजेत् ॥' इति । मतान्तरमाह यदि वेतरथेति । यदि त्वन्यथा मन्यसे तर्हि वदाम । तीव्रवैराग्यो ब्रह्मचर्यादेव सन्यसेत् मन्दवैराग्यस्तु यथेच्छ गृहाद्वा वनाद्वेति । 'ननु—उक्तरीत्या ब्रह्मचर्यादिष्वाश्रमेषु यथावद्धर्मानुष्ठायिना, तत्तदाश्रमात्प्रव्रजेदिति प्रतीयते । तथा सति स्नातकविधुरादीनामनाश्रमिणामाश्रमिणा च केषाचित् केनचित्प्रतिबन्धेन विहितधर्माननुष्ठायिना सत्यपि वैराग्ये सन्यासो न प्राप्नुयात्' (मा०) इत्याशङ्क्याह अथ पुनरित्यादि । तथा च वृद्धजाबालि । 'व्रतिको वाव्रतिको वा स्नातकोऽस्नातको

यावसथ्यनावसथी वाग्निहो॑त्र्यनग्निहोत्री वा ग्रामादग्निमाहृत्य' इत्यादि (या॰)। ब्रह्मचर्याश्रमे तिष्ठन्नपि तद्विहितानि कर्माणि न करोति य सोऽव्रतीति। अनुपनीतोऽप्यत्र ध्वन्येत 'सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत्' इति श्रुत्यन्तरात् (९पृ॰)।

६४, ६ तद्वके। 'तत् तत्र ह किल एके केचनाचार्या' इति शङ्क।

६४, ६—६५, २ तदु तत्तु अग्निकाय तथा तेन प्रकारेण न कुर्यात्। परतु आग्नेयमेव कुर्यात्। कस्मात्। अग्निर्हि वै प्राण। अग्निदेवो हि प्राण सन् प्राजापत्यादिदेवेभ्यो ऽतिरिच्यत इति भाव। एवमग्ने प्राणस्वरूपत्वात् परमार्थत एतया इष्ट्या प्राणमेव करोति यजते। अथवा। एतया इष्ट्या तमग्निं प्राणमेव प्राणमय तथा समारोपयोग्य करोतीत्यर्थ। यद्वा करोति गमयतीत्यर्थ।

६५, २ त्रैधातवीयामेव कुर्यात्। विकल्पेनेति शेष। यथाह बोधायन (शालीनायायावरवृत्तिग्रहणविषये)। 'त्रैधातवीयेनेष्ट्वा प्रस्थास्यति वैश्वानर्या वा' इति (३, १, १२)। अन्यस्त्वाग्नेयीं कृत्वा त्रैधातवीमपि कुर्यादिति व्याख्यायते।

६५, २—३ एत एवेत्यादि। गुणत्रयविराजनार्थेयमिष्टिरिति भाव।

६६, १—२ ननु कथमप्राणेनाग्ने समारोप सभवतीत्याशङ्कयाह श्रुति एष वेत्यादि। स्पष्टम्। समारोप कुर्वन्नपि

'प्राणं गच्छ स्वाहा' इत्येवमेव एतत् उक्तार्थम् आह उच्चारयति।

६६, ३. साग्निकस्य संन्यासमुक्त्वाथ निरग्नेः संन्यासमाह ग्रामादिति। ग्रामात् श्रोत्रियागारात्। आहृत्य अध्वर्य्वादिभिरानाय्य।

६६, ३—४. यद्यग्निं न विन्देत्। शुद्धस्याग्नेरभावे इत्यर्थः।

६६, ४. आपो वै सर्वा देवताः। "ते देवा अग्नौ तनूः संन्यदधत' इत्यभिधानादग्निः सर्वदेवतात्मकः। स चाग्निरप्सु प्रविष्टः 'स निलायत सोऽपः प्राविशत्' इति श्रुतेः। तस्मादपां सर्वदेवतारूपत्वम्' इति सायणस्तैत्तिरीयब्राह्मणभाष्ये (२, ७, ३)।

६६, ६. मोक्षमन्त्रस्त्र्येवं विन्देत्। वेदमूलभूतो मोक्षमन्त्रः प्रणवः त्रयी वेदत्रयात्मकः वेदत्रयतुल्य इति विन्देत् विद्यात्। प्रणववर्जं वेदांस्त्यजेदिति भावः। तदुक्तं बोधायनेन। 'एवमेवैष आ शरीरविमोक्षणाद् वृक्षमूलिको वेदसंन्यासी। वेदो वृक्षस्तस्य मूलं प्रणवः प्रणवात्मको वेदः। प्रणवं ध्यायेत्। प्रणवो ब्रह्म-भूयाय कल्पत इति होवाच प्रजापतिः।' इति (२, १०, १८, २४—२६)।

६७, १—२. जनक आह एवमेवैतद्भगवन् इति। श्रुतिराह इति वै याज्ञवल्क्यः इति। आहेति शेषः। (शङ्क°)।

६७, ५—६८, १. इदमेवास्येत्यादि। यज्ञोपवीतविसर्जनात् प्राशनादाचमनाचानन्तरमात्मैवास्य यज्ञोपवीतमिति योजना।

६८, १—३. अयं विधिरित्यादि। यथोक्तयज्ञोपवीतविसर्ज-

वावसथ्यनावसथी वाग्निहोत्र्यनग्निहोत्री वा ग्रामादग्निमाहृत्य' इत्यादि (या°)। ब्रह्मचर्याश्रमे तिष्ठन्नपि तद्विहितानि कर्माणि न करोति य सोऽव्रतीति। अनुवर्ततेऽप्यत्र ध्वन्येत 'सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत्' इति श्रुत्यन्तरात् (९पृ°)।

६४, ६. तद्धैके। 'तत् तत्र ह किल एके केचनाचार्या' इति शङ्क°।

६४, ६ — ६५, २. तदु तत्तु अग्निकार्यं तथा तेन प्रकारेण न कुर्यात्। परतु आग्नेयीमेव कुर्यात्। कस्मात्। अग्निर्हि वै प्राण। अग्निदेवो हि प्राण सन् प्राजापत्यादिदेवेभ्यो ऽतिरिच्यत इति भाव। एवमग्ने प्राणस्वरूपत्वात् परमार्थत एतया इष्ट्या प्राणमेव करोति यजते। अथवा। एतया इष्ट्या तमग्निं प्राणमेव प्राणमय तथा समारोपयोग्य करोतीत्यर्थ। यद्वा करोति गमयतीत्यर्थ।

६५, २ त्रैधातवीयामेव कुर्यात्। विकल्पेनेति शेष। यथाह बोधायन (शालीनादिवृत्तिग्रहणविषये)। 'त्रैधातवीयेनेष्ट्वा प्रस्थास्यति वैश्वानर्या वा' इति (३, १, १२)। अन्यस्त्वाग्नेयीं कृत्वा त्रैधातवीमपि कुर्यादिति व्याख्यायते।

६५, २—३. एत एवेत्यादि। गुणत्रयविसर्जनार्थेयमिष्टिरिति भाव।

६६, १—२. ननु कथमप्राणेनाग्ने समारोप सभवतीत्या शङ्कयाह श्रुति एष वेत्यादि। स्पष्टम्। समारोप कुर्वन्नपि

'प्राणं गच्छ स्वाहा' इत्येवमेव एतत् उक्तार्थम् आह उच्चारयति।

६६, ३. साग्निकस्य संन्याससुक्त्वाथ निरग्नेः संन्यासमाह ग्रामादिति। ग्रामात् श्रोत्रियागारात्। आहृत्य अध्वर्य्वादिभिरानाय्य।

६६, ३—४. यद्यग्निं न विन्देत्। शुद्धस्याग्नेरभावे इत्यर्थः।

६६, ४. आपो वै सर्वा देवताः। ''ते देवा अग्नौ तनूः संन्यदधत' इत्यभिधानादग्निः सर्वदेवतात्मकः। स चाग्निरप्सु प्रविष्टः 'स निलायत सोऽपः प्राविशत्' इति श्रुतेः। तस्मादपां सर्वदेवतारूपत्वम्' इति सायणस्तैत्तिरीयब्राह्मणभाष्ये (२, ७, ३)।

६६, ६. मोक्षमन्त्रस्त्र्येवं विन्देत्। वेदमूलभूतो मोक्षमन्त्रः प्रणवः त्रयी वेदत्रयात्मकः वेदत्रयतुल्य इति विन्देत् विद्यात्। प्रणववर्जं वेदांस्त्यजेदिति भावः। तदुक्तं बोधायनेन। 'एवमेवैष आ शरीरविमोक्षणाद् वृक्षमूलिको वेदसंन्यासी। वेदो वृक्षस्तस्य मूलं प्रणवः प्रणवात्मको वेदः। प्रणवं ध्यायेत्। प्रणवो ब्रह्म-भूयाय कल्पत इति होवाच प्रजापतिः।' इति (२, १०, १८, २४—२६)।

६७, १—२. जनक आह एवमेवैतद्भगवन् इति। श्रुतिराह इति वै याज्ञवल्क्यः इति। आहेति शेषः। (शङ्क°)।

६७, ५ — ६८, १. इदमेवास्येत्यादि। यज्ञोपवीतविसर्जनात् प्राशनादाचमनाचानन्तरमात्मैवास्य यज्ञोपवीतमिति योजना।

६८, १—३. अयं विधिरित्यादि। यथोक्तयज्ञोपवीतविसर्ज-

नायनन्तरम् अथ वक्ष्यमाणः कल्पद्वयात्मको विधिः नियम. प्र-
व्राजिना विधते । यथा । जीवित मे समाप्यतामिति कृतनिश्चयो
थानप्रस्थाश्रमे प्रसिद्धाना पञ्चाना मरणप्रकाराणामेकतमेन देह त्यजति।
वीराध्वाने वीराध्वनि नीराध्वद्वारेति यावत् । एवमुत्तरत्रापि सप्तमी
तृतीयार्थे । अथ प्रथम. कल्प । द्वितीयकल्पमाह अथेत्यादिना ।
अथ यदि तु (अथवेत्यपि पाठ.) परिव्राट् अटनशील । स
भवतीति शेषः । तर्हि मुण्ड इत्यादि ।

६८, ४. अद्रोही । 'वाड्मन.कर्मदण्डैर्भूतानामद्रोही' इति
बोधायनवचनात् (२, ६, ११, २३) ।

६९, १—२. 'एष पन्था ब्रह्मणा ह्यानुवित्तस्तेनैति ब्रह्मवि-
त्पुण्यकृत्तैजसश्च' इति बृहदारण्यकोपनिषदभिधानम् (४, ४, ९) ।

७०, ३. यथाजातरूपधरः । जननकाले येन रूपेण जातस्त-
द्रूपधर एव । दिगम्बर इत्यर्थ ।

७०, ४. तत्र प्रसिद्धे ब्रह्ममार्गे । 'सम्यक् संशयविपर्ययरा-
हित्येन सपन्न. सपत्तिं प्राप्त. । ब्रह्मसाक्षात्कारवानित्यर्थ. ।' इति शङ्क ।

७०, ५. यथोक्तकाले । 'विधूमे सन्नमुसले व्यङ्गारे भुक्त-
वज्जने' इत्यादेर्मनुवचनात् । विमुक्त विमुक्तमार्ग. असकृत्तमाधूकरेणेति
यावत् ।

७१, २—३. अनिकेतवासी स्थाने निजत्वबुद्धिराहित्येन
निवसन् ।

७१, ३. अप्रयत्नः 'नानाविधोपकरणादिसंपादने प्रयत्नशून्यः' इति शङ्क ।

७१, ३. शुक्लध्यानपरायणः । शुक्लध्यानं निर्विकल्पसमाधि. । अथवा शुक्लः स्वयप्रकाशानन्दात्मा (शङ्क) । श्रूयते हि 'यदादित्यस्यादित्यत्वं तच्छुक्लं पुरुषमलिङ्गम्' इति (मैत्रायणीयोपनिषदि ६,३५)। स्मृतिश्च 'यत्तच्छुक्लं महज्ज्योतिर्दीप्यमानं महद्यशः' इत्यादि (सनत्सुजातीये ६, १) ।

७१, ४. अशुभकर्मनिर्मूलनपर. । अशुभम् अपथ्यं स्वर्गादिप्रदत्वान्मुमुक्षूणामनभिमतमिति यावत् ।

७१, ४-५. य एव सन्न्यासेनैव मरणात्प्रागपि देहत्यागं करोति देहबुद्धिमत्यन्तं विसृजति स इत्यादि ।

---

अथ प्रश्नोपनिषट्टिप्पण्यारभ्यते ।

७५, २. शुनकवुलोपन्न. शौनक. । अङ्गिरसम् आङ्गिरसम् अङ्गिर.कुलोत्पन्नम् ।

७५, ३—७६, १. दिव्ये — क एषः । दिव्ये नवपुरे सप्रतिष्ठिता भवन्ति । इति वागादीन्द्रियान्द्रियाधिष्ठानदेवताना विषये यदुच्यते तत्कथमिति शेष । किं तत्र नवपुरशब्देन देहो विवक्षित उत देहाद्व्यतिरिक्तः कश्चित्पदार्थ इति प्रष्टुराशयः । दिव्ये ब्रह्मपुर कथमिति । ताश्च देवताः कथं सृजन्तीति [illegible]

स्वातन्त्र्येणैव व्याप्रियन्त उत नेति । नो चेत्तर्हि कस्यैष महिमा कस्यैतद्वागादिदेवताना संयमनस्य प्राबल्य बभूव जात इति तृतीय प्रश्न । यो यस्य हि च एष उक्त महिमा बभूव क एष तस्य स्वरूप किमिति चतुर्थ प्रश्न ।

७६, २ प्रथमप्रश्नस्योत्तरमाह प्राणो ह्येष आत्मेति । यो वागादिदेवताना प्रतिग्रभूतो 'दिव्य ब्रह्मपुरम्' इत्याद्य पदार्थ स न देह देहस्य दिव्यत्वायोगात् किंतु प्राण एष, आत्मेष इत्यर्थ । हि खलु । तथा च छान्दोग्यश्रुति । 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्य ब्रह्मपुरमस्मिन्कामा समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्यु' इत्यादि (८, १, ३) ।

७६, २ अत्रावसरप्राप्तमपि द्वितीयप्रश्न विस्तरेणाग्र प्रतिवक्ष्यन् सूचीकटाहन्यायेन मध्ये तृतीयचतुर्थयो प्रश्नयोरुत्तरमाह आत्मन इत्यादिना।

७६, २—३ तृतीयप्रश्नस्योत्तरमाह आत्मनो महिमा बभूवेति । आत्मा हि प्राणो भूत्वा प्रजा प्राविशत् । यथाह मैत्रायणीयश्रुति । 'प्रजापतिर्वा एकोऽग्रेऽतिष्ठत् स नारमतैक सोऽत्मानमभिध्यात्वा बह्वी प्रजा असृजत । ता अश्मेवाप्रबुद्धा अप्राण । स्थाणुरिव तिष्ठमाना अपश्यत् । स नारमत सोऽमन्यतैतासा प्रतिबोधनायाभ्यन्तर विविशानि । स वायुरिवात्मान कृत्वाभ्यन्तर प्राविशत् ।' इति (२, ६) । प्रवेशानन्तरमपि प्राणसवादे मुख्यप्राणस्य महिमा सिद्धोऽभूदिति बहुधा श्रूयते ।

७६, ३—५. अथ चतुर्थस्योत्तरं देवानामायुः—विभातीति । देवानां निधनमनिधनम् । स इति शेषः । तदुक्तं प्रश्नोपनिषदि । 'तेऽश्रद्दधाना बभूवुः सोऽभिमानादूर्ध्वमुत्क्रामत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते' इति । आत्मनः प्राणत्वमुक्त्वाथ तस्य ब्रह्मत्वमाह दिव्ये—विभातीति । तदपि स एवेति शेषः ।

७६, ५—८१, १. इदानीमवशिष्टस्य कथं सृजन्तीति द्वितीयप्रश्नस्य विस्तरेणोत्तरमाह स नियच्छतीत्यादिना आत्मा देवता वेदयतीत्यन्तेन । तत्र चायं क्रमो बोध्यो यथा—प्रथमं तावन्मरणसमये यद्भवति तत्प्रदर्शयति स नियच्छतीत्यादिना । तदनन्तरं च स सृजत्याकर्षतीत्यादिना ज्योतिरानन्दयते (७९ पृ° १ प°) इत्यन्तेन सुषुप्तिवृत्तान्तस्य कथनम् । ततो भूयस्तेनैवेत्यादिना स्वप्नावस्थोच्यते । तदनन्तरं च स जाग्रदित्यादौ जाग्रदवस्था । ततः समाधिस्थस्यावस्थात्रयातीतत्वं सूचयति य एष स्तन इत्यादिना । ततः शुभाशुभमित्यादिना तदेव तुरीयं वर्णयति । अन्ते चोपसंहरति आत्मेत्यादिना ।*

७६, ५—७७, १. चतुष्कोणाकृतिचिह्नान्तर्गतः कोशेषु नष्टो ग्रन्थसंदर्भः प्रश्नोपनिषदनुसारेण (२, ४) अस्माभिरनुमितः ।

---

*अन्त्ये भागे दण्डादिकं प्राचीनकोशेषु कुत्रापि न दृश्यमित्यस्माभिरपि न निवेशितम् ।

७७, १ माक्षीकवत् इतानत् ।

७७, १—३ यथेत्यादि । अत्राध्यात्ममेवोक्तो दृष्टान्त श्रुत्य न्तरेषु तु प्रायशोऽविलोकमेवो यते । यथा मुण्डकोपनिषदि । 'यथोर्णनाभि सृजते गृह्णते च तथाक्षरासभवतीह विश्वम्' इति (१, १, ७) । स्मर्यते च । 'यथोर्णनाभिर्हृदयादूर्णा सतत्य वक्त्रत । तया विहृत्य भूयस्ता ग्रसत्येव महेश्वर ॥' इति (भागवते ११, ९, २१) । दृष्टातस्य युक्तता शङ्करानदो दर्श यति 'ऊर्णनाभिर्यथा' इत्यादे (८९ पृष्ठे) वक्ष्यमाणस्य श्लोकस्य व्याख्याने * । 'यद्यपि नालीकृताना तन्तूना शुष्काणामूर्णनाभि शरीर उपसहारो न दृष्टचरस्तथाप्यार्द्राणा लालासमानाना सद्य सृष्टाना मुपसहारस्य दृष्टत्वात्तावता दृष्टान्त उपपन्न ' इति । माक्षीकेन माक्षीक एकेन । सधिश्छान्दस ।

७७, ३ यदायाति ससृष्टमाकृष्य । यदा सृष्टयर्थं बहिर्गत्वेव ससृष्टमाकृष्य 'वागादिसघात गृहीत्वैव' (ना) आयाति स्व स्थान प्रत्यागच्छतीत्यर्थ ।

७७, ४ सुष्वपे सुषुप्तौ ।

७७, ४ यथेत्यादि । यथा श्येन खमाश्रित्येति योजना । भ्रमणपरिश्रान्त शकुनिरिति भाव ।

७७, ५ सुषुप्तभूते । 'अथ यदा सुषुप्तो भवति' इत्यादि

---

* प्रथमखण्डस्य स्वव्याख्यायातत्वादत्र एव दर्शयतीति ।

श्रुतेः (बृहदा॰ उप॰ २, १, १९)। मूर्च्छादेरप्युपलक्षणमेतत्।

७७, ५—७८, १. यथैवैष देवदत्तः। मूर्च्छां गत इति शेषः। यष्ट्यापि ताड्यमानो न वेत्ति। स्पष्टम्। यष्ट्यादिना ताड्यमानः (यष्ट्यादिताड्यमानः) इति पाठे त्वकस्माद्दण्डादिघातेन मोहं प्राप्तः किंचिदपि नाभिजानातीत्यर्थः।

७८, ३. स्वप्ने सुषुप्तौ।

७९, २. तेनैव पूर्वोक्तेन प्राणभूतेनात्मना सहेत्यर्थः।

७९, २. जलौकावत्। जलौकादृष्टान्ताच्चाभिज्ञेयेयं स्वभावस्थेत्यर्थः। न तु जलौकावद्गच्छतीति योजना।

७९, २ — ८०, १. यथा जलौकेत्यादि। 'जलौका तृणजलौका तृणस्थः कीटविशेषः' इति ना॰। अग्रमग्रं नयत्यात्मानं तृणाग्रात्तृणाग्रं निजं देहं गमयति। तस्य गमनप्रकारं विशिनष्टि नयतीत्यादिना। नयति गमयति। आत्मानमिति शेषः। परं तृणान्तरसकाशम्। एवं च कुर्वन् अपरं पूर्वं तृणं न त्यजति किंतु संधयति आत्मानं सेतुमिव कृत्वा परेण संदधातीत्यर्थः। यत्र सुषुप्तमर्थत्यक्तं जाग्रत्ता चार्थप्राप्ता स स्वप्न इति भावः।

८०, १. अत्र लुप्तो ग्रन्थः 'यदा बुद्धिगतैः पुण्यैः प्रेरितेन्द्रियमार्गतः। शब्दादीन्विषयान्भुङ्क्ते तदा जागरितं भवेत्' इत्यादिमानसोल्लासादिवचनानुसारेण सुखमनुमीयेत।

८०, २. यथैवैष वियक्षुर्देवदत्तः कपालाष्टकम् अष्टौ कपा-

लानि सनयति समकाल वहति (ना) । तथैव जागरितस्थ आत्माष्टौ ग्रहान्वहतीति छिद्रस्य पूरणं स्यात् । अष्टौ ग्रहाः प्राणो नाम घ्राणेन्द्रिय (१) वाक् (२) जिह्वा (३) चक्षुः (४) श्रोत्र (५) मनः (६) हस्तौ (७) त्वक् (८) । तथा हि बृहदारण्यकोपनिषदि श्रूयते । 'अथ हैन जारत्कारव आर्तभाग. पप्रच्छ । याज्ञवल्क्येति होवाच कतिग्रहा. कत्यतिग्रहा इति । अष्टौ ग्रहा अष्टावतिग्रहा इति । ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति । प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीत., प्राणेन* हि गन्ध जिघ्रति ।' इत्यादि (३, २)। एव चास्यार्धलुप्तस्य ग्रन्थस्याय भाव उल्लसति । सुषुप्त्यवस्था सर्वेन्द्रियोपसहाररूपा, स्वप्नावस्थाया मन एव नोपसहृत, जाग्रदवस्थाया तु न कस्याप्युपसहार. । तथा जाग्रदवस्थायामेव केवल अष्टौ कपालानि सनयति समकाल सर्वैः स्वकरणैरन्वितो दृश्यते पुरुषः । इति ।

८०, ३. य एष स्तन इवावलम्बते । कण्ठे स्थिता प्रतिजिह्वा । एष देवयोनिः । बोधिस्थानम् । यत्र जाग्रति जागर्ति । ससारस्वप्नादुत्थायेति शेष । तथा च क्षुरिकोपनिषत् । 'ततः कण्ठान्तरे योगी समूह नाडिसचयम् । एकोत्तर नाडिशत तासा मध्ये वरा स्मृताः ॥ इडा रक्षतु वामेन पिङ्गला दक्षिणेन तु । तयोर्मध्ये वर स्थान यस्त वेद स वेदवित् ॥' इति । अत्र

---

* अपानेनेत्यपपाठ ।

तैत्तिरीयोपनिषत् (१, ६, १) सायणीयभाष्यं चाप्युदाहर्तव्ये ।

८०, ४. अनिरुक्तम् । संभावयितुमशक्यम् । अनध्यारोपणीयमिति यावत् ।

८०, ४. संप्रसादः प्रपञ्चोपशमः ।

८०, ५. खगः । 'द्वा सुपर्णा' इत्यादिश्रुतेः (श्वेत° उप° ४, ६) ।

८०, ५. कर्कटकः । यथा कर्कटकस्य गतिर्वक्रतया दुर्बोधा एवं कालरूपस्य परमात्मनो गतिरपि दुर्बोधेति भावः ।

८१, १. वेदयति । ज्ञापयति स्वे स्वे कर्मणि विनियुङ्क्ते । 'एवमेवैष प्राण इतरान् पृथक्पृथगेव संनिधत्ते' इति श्रुत्यन्तरात् (प्र° उप° ३, ४) ।

८१, १—२. परं ब्रह्मधाम दिव्यं ब्रह्मपुरमित्याख्यं क्षेत्रज्ञं परमात्मानम् उपैति उपगच्छति । मुण्डकोपनिषदपि । 'स वेदैतत्परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम् । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥' इति (३, २, १) ।

८१, ४ — ८२, १. अथ——मूर्धेति । 'पुरुषस्य उक्तलक्षणस्य स्थानानि, तत्र ध्याने सति शीघ्रमभिव्यक्तेः । नाभिः मणिपूरचक्रं हृदयम् अनाहतं, कण्ठं कण्ठः विशुद्धिचक्रं, मूर्धा आज्ञाचक्रम् । आधारायनेकध्यानस्थानसत्त्वेऽपि प्राशस्त्यार्थं चतुर्णां ग्रहणम् ।' इति ना° । 'चकाराच्चक्षुरादीन्यपि स्थानान्युपासनान्तरेषु' 'यद्यपि नेत्रे

कण्ठे हृदये मूर्धनि 'जागरितादीनि वक्ष्यति (९० पृ॰) तथाप्यत्र नाभ्यादीनामुक्तत्वादुपलब्ध्यर्थमेवं चिन्तनीयम् । अथवा नाभ्यादि यथाक्रमं परित्यज्य नाभिर्नेत्रं च समुच्चयेन विकल्पेन वा जागरितस्थानम् ।' इति शङ्क॰ ।

८२, ३. तुरीयमक्षरम् । 'तुरीयं संख्यातीतमपि चतुर्थं वक्ष्यमाणम्' इति शङ्क॰ । तथा च माण्डूक्योपनिषत् । 'अद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः ।' इति ।

८२, ३ — ८३, १. स आदित्यश्च —— ज्योतिर्वर्जितम् । तेषां मध्ये यत् स्वयममनस्कत्वादिविशिष्टं परं ब्रह्म विभाति स आदित्यश्चेत्यादि । एष संबन्धः । तेषां चतुर्णां मध्ये यदित्यादि । 'चाक्षुषः स्वप्नचारी च सुप्तः सुप्तात्परश्च यः । भेदाश्चैतेऽस्य चत्वारस्तेभ्यस्तुर्यं महत्तरम् ॥ त्रिष्वेकपाच्चरेद्ब्रह्म त्रिपाच्चरति चोत्तरे ।' इति श्रुत्यन्तरात् (मैत्राय॰ उप॰ ७, ११) । स्वयं 'स्वेनाविद्याव्यतिरिक्तेन रूपेण' इति शङ्क॰ । ज्योतिर्वर्जितम् । सूर्यचन्द्रादिव्यावहारिकज्योतिर्भिः शून्यं तैरप्रमेयमित्यर्थः । 'न तत्र सूर्यो भाति' 'तं देवा ज्योतिषां ज्योतिः' 'भासा हीनोऽस्मि भास्यहम्' इत्यादिश्रुतेः (काठ॰ उप॰ ५, १५; नृसिंहोत्त॰ उप॰ ६; १२० पृ॰, ११ प॰) । अग्निर्जाग्रत् । अग्निः प्राणः । 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति' इति श्रुतेः (प्रश्नोप॰ ४, ३) ।

८३, १—५. तत्र परब्रह्मणि लोका नलोका लोका अलोका

इति द्वैतं न विद्यते । तथा वेदा नवेदा इत्यपि न । तथा देवा नदेवा इत्यपि न । इति । एवमादौ वर्तमानस्य नकारस्योपरि सर्वत्रान्वयः । अस्यार्थः श्रीगौडपादाचार्येणाप्युक्तः । 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥' इति ।

८३, ६ — ८४, ३. हृद्याकाशे हृदयगते बिले तत् प्रसिद्धं विज्ञानमाकाशं विज्ञानरूप आकाशः । यद्वर्तत इति शेषः । तदेव सुषिरमाकाशं बाह्य आकाशः । 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति श्रुतेः (छा॰ उप॰ ८, १, ३) । हेतुमाह तद्विद्यादित्यादिना । तत् । आकाशम् । विद्यात् जानीयात् । उक्ते हृद्याकाशे । तदेव हृदयबिले स्थितं ज्ञानमयाकाशमभिजानीयादित्यर्थः । यस्मिन्निदं महद्भूतं सं च वि चरति संचरति विचरति च । तिष्ठतीत्यर्थः । यस्मिन्निदं सर्वमोतप्रोतम् । स्पष्टम् । स विभुः प्रजासु स सर्वप्राण्यन्तरस्थ इति ध्यानेन यो वेद स तत्परं ब्रह्म भवति । इति निर्वाणं तच्च निर्वाणं विश्वजगदुपशमनरूपो मोक्षः । न तत्र निर्वाणे देवा ऋषयः पितर ईशते । लोकत्रये प्रबला अपि तत्र शक्तिहीनाः । कस्मात् । इति यस्मात् प्रतिबुद्धः सर्ववित् । 'हृदिस्था देवताः सर्वाः' इत्यादिज्ञानेन सर्वविदं प्रतिबुद्धं प्रत्यसर्वविदो देवादयो न प्रभवन्तीति भावः ।

८५, १. प्राणः मुख्यः प्राणः । ज्योतिः 'स्वयंप्रकाशं परं

ब्रह्म ' (शङ्क०) । त्रिवृत्सूत्र च यन्महत् विद्वद्भिर्ध्रियमाण ब्रह्मविष्णु रुद्रात्मक विश्वसदर्भकर सूक्ष्म सूत्रमित्यर्थ ।

८५, २ मानसिकयज्ञोपवीतस्य स्थान विशिष्य निर्दिशति हृदीति । हृदयकमलगते विज्ञानरूप आकाशे तिष्ठतीत्यर्थ । इद च धारय देहलीदीपन्यायेन पूर्वोत्तराभ्यामन्वेति ।

८५, ३—६ अथ स्थूलोपवीतपरिधाने विहित मन्त्र सूक्ष्मोप वीतपरिधानपरतयैवानुवदति यज्ञोपवीतमित्यादि ।

८५, ८ 'तदेव सूत्र ब्राह्मणत्वसूचकमिति धारयेत् अपरो क्षतया जानीयादनुभवेदित्यर्थ ' (अप्प०) ।

८५ ९ सूचनादिति । अत्रारण्युपनिषत् तट्टिप्पणी च द्रष्टव्ये (७ ४) ।

८६, १ येन सूत्रेण ' इति शङ्क० । 'येन यस्मिन् ब्रह्मणि सूत्र इत्यर्थ ' इत्यप्प० ।

८६, ५ उच्छिष्ट शरीरद्वारान्नप्रवेशनिर्गमनाभ्याम् । अशु चि मनोवाक्कायपापात् ।' इति शङ्क ।

८७, २—३ यस्य नास्या केशादिरूपा शिखा अस्ति किंत्वेकैव अग्नेरिव अग्निशिखातुल्या ज्ञानमयी शिखा स इत्यादि । 'यथा भस्म तथा मूर्खो विद्वान्प्रज्वलिताग्निवत् ' इति स्मृते (बृहत्पराशरसहिताया ४ अ) । शङ्करानन्दस्तु । 'यथा जातवेदस शिखा ज्वाला जातवेद स्वरूपादन्या न तद्वत् यस्य परमहसस्य स्वयप्रका

शचैतन्यस्यानन्दात्मनः ज्ञानमयी अहमेवंरूपोऽस्मीत्येतद्बोधमयी शिखा चैतन्यप्रदीप्तिश्चैतन्यादभिन्ना' इति । केशधारिणः केशमात्रधारिणः मुख्यशिखारहिताः ।

८७, ८. यत्परायणं यस्य परायणम् ।

८८, १. 'यज्ञः दर्शपूर्णमासज्योतिष्टोमादिलक्षणः स्यादित्यनुषङ्गः' इति शङ्क° ।

८९, ५—६. एवमित्यादि । य एनं सत्येन तपसानुपश्यति । तेनेति शेषः । असावात्मा एवम् उक्तप्रकारेण निज आत्मनि गृह्यत इत्यन्वयः । सत्येन तपसा ज्ञानमयेन तपसा । 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इति श्रुत्यन्तरात् (मुण्ड° उप° १, १, ९) ।

८९, ८. जाग्रत्स्वप्ने जाग्रत्सुषुप्ते (७७ पृ°) । स्वप्नस्याप्युपलक्षणमेतत् । गच्छत्यागच्छते पुनः जाग्रति स्वप्ने च बहिर्गत्वेयानन्तरं सुषुप्तावात्मानं प्रत्यागच्छतीत्यर्थः ।

८९, ९ — ९०, १. पूर्वं हृद्याकाशे (८३, ६) इत्यादिनोक्तमर्थं पद्मेत्यादिना पद्येनानुवदति । कदलीकोशसदृशमधोमुखं च सुषिरं बिलं, यदस्तीति शेषः, तदित्यादि ।

९०, ५. तेनेति । तर्हि तेनैव प्रकारेणास्य ध्यानं संध्या भवति संध्याख्यं प्राप्नोति । अथवा तेनैव प्रकारेण संध्याध्यानं संध्यावन्दनं कर्तव्यमिति शेषः । तस्मात्संध्याभिवन्दनं, संन्यासिनामपि

विहितमिति शेषः । यद्वा तस्मात् तस्मादेव नान्यहेतोः संध्याभि-
वन्दनं नाम । इत्यवगन्तव्यमिति शेषः ।

९०, ६. निरूदका निरुदका । दीर्घश्छान्दसः । स्नाना-
दिरहितेत्यर्थः । वाक्कायक्लेशवर्जिता मन्त्रमुद्रादियन्त्ररहिता ।

९०, ७. मधिनी सर्वभूतानाम् । सर्वाणि भूतानि संधाप-
यतीति मधिनी सर्वभूतानाम् ।

९०, ९ — ९१, ३. यत् क्षीरे सर्पिरिवान्वितं सर्वव्यापिन-
मात्मानमिति तथा आत्मविद्यातपोमूलमुपनिषत्परं च तद्ब्रह्मेति ज्ञात्वा
मुच्यत इति योजना । आत्मविद्यातपोमूलम् आत्मविद्यातपसी
यस्य मूलं यत्प्राप्तौ मूलमिति यावत् तत् । उपनिषत्परं गुह्योपदेशाग्र्य-
भूतम् । तत् प्रसिद्ध ब्रह्म ।

---

अथाश्रमोपनिषट्टिप्पण्यारभ्यते ।

९५, ५ — ९६, २. योऽष्टाचत्वारिंशदित्यादि । योऽष्टाचत्वा-
रिंशद्वर्षाणि, प्रतिवेद द्वादशेति यावत्, यो वा वेदस्य वेदाना
ग्रहणान्त सम्यङ्ज्ञानपर्यन्त वेदब्रह्मचर्य चरेत् स ब्राह्मः तस्य ब्राह्म
इति सज्ञेत्यर्थः ।

९६, २—३. स्वदारनिरत इत्यादि । वसिष्ठविश्वामित्रादिवद्
ऋतुकालमात्रगामी गृहस्थोऽपि सन् अस्खलितब्रह्मचर्यः प्राजापत्य इति
संज्ञा लभते ।

९६, ७ — ९८, ४. गृहस्था इत्यादि । तत्र वार्त्ताकवृत्त्यादीनां चतुर्णां प्रथमो ग्रामे यथासुख तिष्ठति, अन्ये तु त्रयो ग्रामान्त एव ग्रामाद्बहिर्वा कष्टमेन काचिद्वृत्तिमुपजीवन्ति । यथोक्तं बौधायनेन । 'अथ शालीनयायावरचक्रचरधर्मकाङ्क्षिणां नवभिर्वृत्तिभिर्वर्तमानानाम् । केशश्मश्रुलोमनखानि वापयित्वोपकल्पयते । कृष्णाजिनं कमण्डलुं यष्टिं वीवधं कुतपहारमिति । त्रैधातवीयेनेष्ट्वा प्रस्थास्यति वश्यानयां वा । निर्गत्य ग्रामान्ते ग्रामसीमान्ते वावतिष्ठते तत्र कुटीं मठं वा करोति कृतं वा प्रविशति ।' इत्यादि (३ प्रश्ने १ अध्याये) ।

९७, २ वार्त्ताकवृत्तय । वार्त्ताको नाम बलपुष्टिकारी शाकविशेष । 'अग्निप्रदा मारुतनाशिनी च शुक्रप्रदा शोणितवर्द्धिनी च' इत्यादिराजवल्लभवचनात् (शब्दकल्पद्रुमे) । तदादिभि शाकै धान्यफलादिमिश्र विषयभोगेन ये जीवन्ति ते वार्त्ताकवृत्तय इति । यद्वा वार्त्ताका कृष्यादिजीविन तेषा वृत्तिर्येषा ते ।

९७, ३—४ शतसवत्सराभिरित्यादि । शतसवत्सराभि आमरणान्ताभि 'पुरुष एव पशूना शतायु' इति श्रुते (शतपथब्राह्मणे ७, ५, २, १७) । अथवा द्विजजन्मपरिमिताभिरित्यर्थ । 'अथ यैव पदम्' इत्यादिश्रुते (२४ पृ) । क्रियाभि यज्ञादिकर्मभि आत्मान परमात्मान प्रार्थयन्ते आशासन्ते । 'सर्वक्रतुयाजिनामात्मयाजी विशिष्यते' इति बौधायनवचनात् (२, ७, १५) ।

९७, ४ शालीनवृत्तय । 'शालीन धार्ष्ट्यं विनैव प्राप्त मयाचितम्' इति श्रीधरस्वामी भागवतदीपिकायाम् (७, ११, १६)। शालीन तु वत्सरपर्यंत स्ववृत्तिहेतो कुसूलमञ्जूषादिषु व्रीहियवादिग्रहणम्' इति विजयध्वजतीर्थ (भागवते ३, १२, ४२)।

९७, ६ ७ यायावरा । 'यायावर प्रत्यह धान्ययाच्ञा' इति श्रीधर (उक्तस्थाने)। 'यायावर भैक्षचर्यविशेष । असञ्चय एकाहित्व तत्तद्दिनार्जितव्रीह्यादेस्तद्दिन एव व्यय वार्ता यायावर ज्ञेयमकाहि त्वमसचय इति' इति विजयध्वजतीर्थ (उक्तस्थाने)। 'यायावर्यम्। यायावर प्रवासी । तस्य कर्म यायावयम् । प्रवासादिना यात्रापूर्व कर्मजनम् इति वीरराघवाचार्य (भागवते ७, ११, १६)।

९८, १ घोरसन्यासिका । एतदभिन्ना बौधायननोक्ताश्चक्रचरा इत्येवमनुमीयते । चक्र मनसि कल्पयित्वा तदनुसारेणैव गत्वा शिलोञ्छन कुर्वन्तीति घोरसन्यासिका ।

९८, ६ वैखानसा । 'विखनसा ब्रह्मणा यानि भगव द्भजनादीनि वैखानससूत्र उपदिष्टानि तेन स्थित्वा तत्कर्तारो वैखा नसा' इति वल्लभाचार्यो भागवते ३, १२, ४३ श्लोकस्य व्याख्याने ।

९८, ७ ग्रामबहिष्कृताभि । ग्रामनिवासिभिरनपेक्षिताभिरित्यर्थ ।

९९, ४ वालखिल्या । इतिहासादिषु प्रसिद्धाना सनत्या क्रता रुपन्नाना पुत्राणा महातपसामृषीणा वृत्ति नाम च ये स्वीकृतवन्तस्ते ।

९९, ५—६. कार्त्तिक्यां——कृत्वा । 'अष्टौ मासान्वृत्त्युपार्जनं कृत्वा चातुर्मास्ये संगृहीताशी कार्त्तिक्यां संगृहीतपुष्पफलत्यागी' इत्यर्थः (३, ४, १८ ब्रह्मसूत्रस्य शाङ्करभाष्यरत्नप्रभाव्याख्यायाम्)। प्रायशस्त्वाश्वयुज एव वानप्रस्थानां संचितस्य त्यागो विधीयते । यथाह मनुः । 'त्यजेदाश्वयुजे मासे मुन्यन्नं पूर्वसंचितम् । जीर्णानि चैव वासांसि शाकमूलफलानि च ।' इति । पुष्पपदं शाकस्याप्युपलक्षणम् ।

१००, २. फेनपाः । स्वयं पतितं पर्णफलादिकं फेनो नामेति केचित् । विजयध्वजतीर्थस्तु 'फेनपा वत्समुखगलितपयःफेनपानेन जीवन्तः' इति (भागवते ३, १२, ४३ श्लोकस्य व्याख्याने) ।

१००, २. उन्मत्तकाः उन्मत्ता इव शीर्णपर्णफलभोजिनः । 'पु° उन्मत्त इव कन् तापसभेदे' इति वाचस्पत्यात् । अथवा उन्मज्जका इति समीचीनः पाठः । तस्यापि व्याख्यानं वाचस्पत्ये दृश्यते । 'कण्ठदघ्ने जले स्थित्वा तपः कुर्वन् प्रवर्तते । उन्मज्जकः स विज्ञेयस्तापसो लोकपूजितः ॥' इति । बौधायनस्तु 'तत्रोन्मज्जका नाम लोहाश्मकरणवर्जम्' इति व्याचष्टे (३, ३, १०) ।

१०१, १. शिक्यं रज्जुनिर्मितं कमण्डल्वादिधारणसाधनम् । वक्ष्यति हि 'शिक्यकमण्डलुहस्ताः' इति ।

१०१, १. पक्षः पक्षवत् स्कन्धे ध्रियमाणो भिक्षापात्रादिवाह-

नार्भकः प्राशास्त्रनपानाविशेषः । तस्य पर्यायौ त्रिवृ इति पंचवृ इति ५ ।

१०१, ५. गर्भिणः ग्राम एक । गर्भिणाऽऽन्द्रम: ।

१०१, ६. एकरात्रं नार्भकस्मिन्दिन उपोष्यान्यस्मिन्दिने भक्षणमित्युपवासविशेषः । द्विरात्र नाम दिनद्वयमुपोष्यान्यस्मिन्दिने भक्षणमिति ।

---

अथ मैत्रेयोपनिषट्टिप्पण्यारभ्यते ।

अत्र गद्यरूपः प्रथमो भागो मैत्रायणीयोपनिषद आद्यभागात्प्रायशोऽभिन्नः । तथा च तदनन्तरं वर्तमानानां श्लोकानामिमाः मम मैत्रायणीयोपनिषदुदाहृता दृश्यन्ते । अतो रामतीर्थविरचितायामुपनिषद्दीपिकाया राम इति चिह्ननिर्देशनपूर्वकं तत्र तत्र किंचिदुदाहरामः ।

१०७, ६—७. अन्ते सहस्राहस्येत्यादि । मुनेः तपस्विनः । 'तपसि स्थितस्य राज्ञः' इति राम० । सहस्रस्येति पाठे तु 'संवत्सराणामिति शेषः' इति राम०, 'अन्ते तपसः कालनियमावसाने सहस्राख्यस्य मुनेरन्तिकम्' इत्यायण० ।

१०८, ३—५. एतद्वृत्तमित्यादि । 'यत्त्वया पृष्टमात्मतत्त्वमेतद्वस्तु पुरस्तात् अतीते काले वृत्तं सिद्धं निर्णीतम्, पूर्वतरैर्ऋषिभिरिति योज्यम् ।' (राम) । इदानीं तु वक्तुं न

शक्यते । तस्मात् अशक्यमेतत्प्रश्नं मा पृच्छेति । अप्पयार्यस्तु 'तत्त्वविषयकमेतद्वृत्तं पुरस्तात् आदौ शिष्यस्य गुरुणा वक्तुमशक्यम्। अतोऽमुं प्रश्नं मा पृच्छ । अपि त्वन्यान्कामान्वृणीष्व । सुविरक्तस्यापि तत्त्वज्ञानप्रतिबन्धकाः केचित्कामा हृदि निगूढा भवेयुः । निःशेषोपभुक्तकामस्यैव तत्त्वज्ञानमुत्पद्येतेत्यभिप्रायः ।' इति (मैत्रायणीयोपनिषद्भाष्ये) ।

१०८, ७. संविदपेतम् । ज्ञानशून्यं जडमित्यर्थः । निरय एव निरयतुल्यम् ।

१०८, १२. अथ किमेतैर्वान्यानाम् । अथ अन्यानां अन्येषां वक्ष्यमाणाना महत्तराणां दोषाणाम् । अभिमुखे इति शेषः । एतैः उक्तैरध्यात्मदोषवचनैः । किं प्रयोजनम् । तदपेक्षयाऽकिंचित्करा एवैत इत्यर्थः ।

१०९, २--३. सोऽहमिति । अहं च तादृशो नश्वरस्वरूप इति ज्ञात्वेत्यर्थः ।

१०९, ३-४. यैरेव नान्यकारणैः असकृदुपावर्तनं पुनःपुनर्जन्मप्राप्तिः दृश्यते । कस्य । आश्रितस्य तदाश्रितस्येत्यर्थः ।

१०९, ८--९. महाराजेत्यादि । हे महाराज बृहद्रथ इक्ष्वाकुवंशध्वजभूतानां शीर्ष अग्र्य, त्वमात्मज्ञः अतः कृतकृत्यः । शीघ्रमेव भविष्यसीति शेषः ।

१०९, ९. उपदेशमारभते मरुन्नाम्नेत्यादिना । स्वपराक्रममुद्दिश्य

मन्नाम्ना विश्रुतोऽसि । अय च मरुत् खलु निश्चित आत्मा ते । मरुद्धि प्राण प्राणश्चात्मेत्यर्थ ।

११०, १ अनर्थो अनर्थावहा ।

११०, २ भूतात्मा भूताभेदेनोपलभ्यमान इत्यर्थ ' (राम)। पर पद 'परम पद वैष्णव धाम' (राम) ।

११०, ३—४ 'तपसा स्वधर्माचरणेन तदविरोधिवैष्णवादि निष्कामव्रतविशेषाचरणलक्षणेन च सत्त्व सत्त्वगुणप्रधान चित्त प्राप्यते, विशुद्धसत्त्वता लभ्यत इत्यर्थ । तस्मात् सत्त्वात् मन सप्राप्यते । मनुतेऽनेनेति मनो विवेकविज्ञानम् ।' तेन मनसा मननन आत्मा पूर्ण तत्त्व पर ब्रह्म हि निश्चित प्राप्यते । आत्मतत्त्वसाक्षात्कार एवात्मप्राप्तिर्नान्या तस्याप्तिर्नित्याप्तस्वरूपत्वात्, अत आत्मसाक्षात्कारो भवतीत्यर्थ ' (राम) । आत्मापत्त्या आत्म प्राप्त्या हि निश्चित निवर्तते शान्तिमधिगच्छतीत्यर्थ । अथवा तपसा सत्त्व सज्ज्ञान ततो मन ध्यान तेन आत्मा आत्मानुभव प्राप्यत इत्यर्थ, 'तस्माद्विद्यया तपसा चिन्तया चोपलभ्यते ब्रह्म इति मैत्रायणीयश्रुतौ प्रकृतश्लोकान तर वक्ष्यमाणत्वात् । महा-नारायणोपनिषदपि 'तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्ति ' इत्यनेन तमेव विषय किंचि द्विस्तरेण वक्ति ।

११०, ७—८ स्वयानादुपशान्तस्य अत सत्यगामिन सद्ब

स्त्वभिमुखस्य तस्माच्च इन्द्रियार्थविमूढस्य इन्द्रियार्थेषु जडस्य मनसः कर्मवशानुगाः देहादयः अनृताः मायामात्राः सन्तीत्यर्थः ।

११०, १३—१४. समासक्तमित्यादि । 'विषयासक्तिवत् ब्रह्मासक्तौ सत्यां सर्वोऽपि मुच्येत' इत्यप्य° ।

१११, १. साक्षिणं बुद्धिवृत्तस्य । रङ्गतुल्ये संसारे प्रकृतिनर्तकी पुरुषः प्रेक्षक इति सांख्याः ।

१११, २. अवधूतादिसंप्लवम् । आदिश्च संप्लवश्च आदिसंप्लवौ तावत्रधूतौ येन सोऽवधूतादिसंप्लवः, आद्यन्तरहित इत्यर्थः, तम् ।

१११, ५. स्तिमितगम्भीरम् । स्तिमितः निष्कर्मकः गम्भीरः गहनश्चेति स्तिमितगम्भीरः, तादृशम् । न तेजो न तमः तेजसा तमसा चेत्युभाभ्यां भिन्नः । पुनश्च ततं व्याप्तम् ।

१११, ६. निर्वाणमयसंविदम् । ज्ञानानन्दस्वरूपम् ।

११२, ७. सावयवस्वरूपम् । भेदस्वरूपत्वादद्वैतविरुद्धमिति भावः ।

११२, १०. सौख्यतमे परमानन्दे ।

११३, ७. ब्रह्मामृतमित्यादि । ब्रह्मामृतपानमस्यान्तरं भैक्षम्, अथापि देहरक्षणार्थं बाह्यमपि भैक्षमाचरेदिति भावः ।

११३, १० — ११४, ७. जातमित्यादि । आन्तरस्नानस्य प्रसक्तिमुपदिशति जातमित्यादिना श्लोकचतुष्टयेन । 'देहं स्पृष्ट्वा स्नानं विधीयत इत्यत्र न करतलेन देहस्पर्शो जलस्नानं वा विधी-

यत इति वाच्यम्, अपि तु देहेऽध्यासवशादात्मबुद्धि कृता चेत् पूर्वोक्त मनोमलत्यागलक्षण स्नान कर्तव्यमित्यभिप्राय ' इत्यप्प' ।

११४, ३ विकाराकरविस्तीर्णम् । विकाराणा रोगादीनाम् आकर, अत एव विस्तीर्ण बहुषु जन्मसु व्याप्तम् । देहमित्यनुषञ्जनीयम् ।

११४, ४ नवद्वारेत्यादि । स्वभावन नित्यापरिहार्यम् । इद च स्वावविशेषणम् । स्वभावजनवद्वारस्रावमिति वक्तव्ये समासाभावश्छान्दस । देहमित्यध्याहार ।

११४, ६—७. मात्रा निमित्तेन मृतसूतसम्बन्ध सूतकेन सम्बन्धो यस्य देहस्य तम् । तदेव मध्ये स्पष्टयति सूतक इति । सूतके सूतिकाले स देह ह हि जायत इति । पुनश्च विशिनष्टि देह मृतसूतकजमिति । मृतसूतकस्य जायमानत्वात् तद्विशिष्टस्य देहस्य जनन सभवतीति तथा व्यवहार । यथा प्रसवकाले तथा मरणेनाप्यशुद्धो भवति य तमित्यर्थ ।

११५, १ वासनात्रयनाशकम् । देहवासना शास्त्रवासना लोकवासना चेति (१७२ पृ) एतत्त्रयनाशकम् ।

११५, ७ अहकारसुतमित्यादि । पूर्वश्लोकोक्तास्वदेशादित्यागादप्यहकारादित्यागो मुख्य इत्यभिप्राय ।

११५, ९—११६, २ ज्ञानप्राप्तेरारभ्य सन्यासिन सध्यावन्दनाद्यनुष्ठानानर्हो इत्याह मृतेत्यादिना श्लोकद्वयेन ।

११६, ८. संधौ संध्यावन्दने संध्यावन्दनस्थान इति यावत् यत्र जीवात्मनोरैक्यं निर्वर्त्यते स एव संन्यासः परिकीर्तित इत्यर्थः ।

११६, ९. वमनाहारवद्यस्य भाति वमनाहारबुद्धिर्यस्य जायत इत्यर्थः ।

११७, २, उभयभ्रष्टः । गार्हस्थ्यात्संन्यासाच्च भ्रष्टः ।

११७, ७. यो यतिः स आन्तरं माधूकरं न त्यजेच्चेत् तदा मुक्तो भवतीत्यन्वयः । आन्तरं माधूकरं विशिनष्ट्युत्तरार्धेन । वैराग्यजनकं बहुव्रीहिर्वा तत्पुरुषो वा । श्रद्धाकलत्रमित्यत्र तु बहुव्रीहिरेव । ज्ञानवन्दनमित्यत्रापि प्रथमपदवत् ।

११७, १०. शिष्यकिंकराः । तच्छिष्येभ्योऽप्यपकृष्टा इत्यर्थः ।

११८, २. परमित्यस्य पूर्वेणान्वयः । परममित्यर्थः । यद्वा परं भ्रमन्ति नितरां भ्रमन्ति ।

११८, ८–९. अथ जीवस्य ब्रह्मत्वे दृष्टान्तद्वयमाह अन्तः पूर्ण इत्यादिना । अत्र प्रथमे दृष्टान्ते जलमुपमानं भवति, द्वितीये त्वाकाशः । द्वितीयो दृष्टान्तः श्रीगौडपादाचार्येणाप्युक्तः 'आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः' इत्यादिना (३, ३–९) ।

११८, ११. यच्छिष्टम् । ग्राह्यग्राहकादिभेदशून्यं परं ब्रह्म ।

११९, १. दर्शनप्रथमाभासम् । दर्शनादिवृत्तिभ्यः प्रथमः पूर्वो य आभासः प्रकाशः तम् । 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतेः ।

१२३, ४ न जगत् । अस्मीति शेष । किंतु सर्वद्रष्टास्मि जगत्साक्ष्येवास्मीत्यर्थ ।

१२४, २—३ यत्किंचिदित्यादि । यत्किंचिदपि लोके क्रियते तेन सर्वेणेत्यध्याहार । हीनोऽस्मि । अथापि स्वल्पमपि विना अह अ न अस्मीत्यन्वय ।

१२४, ६—८ षड्विकारेत्यादि । षड्विकारादयो वराहोपनिषदि श्रूयन्ते । 'षड्भावविकृतिश्चास्ति जायते वर्धतेऽपि च । परिणाम क्षय नाश षड्भावविकृतिं विदु ॥ अशना च पिपासा च शोक मोहौ जरा मृति । एते षडूर्मय प्रोक्ता षट्कोशानथ वच्मि ते ॥ त्वक् च रक्त मासमेदोमज्जाऽस्थीनि निबोधत । कामक्रोधौ लोभमोहौ मदो मात्सर्यमेव च ॥ एतेऽरिषट्का ' इति (१, ८—११)।

१२५, १४ सन्मात्रात् । अन्य इत्यध्याहार । नास्म्यह सदा । सदा सन्मात्र एवास्मीत्यर्थ ।

१२६, ४—५ एव स्वानुभवो यस्य पुरुषस्यास्ति सोऽहमस्मि स मदभिन्न इति न सशय ।

---

नारदपरिव्राजकोपनिषट्टिप्पण्यारभ्यते ।

१२९, ४—५ अपूर्वपुण्यस्थलानीत्यादि । अपूर्वाणि यानि पुण्यस्थलानि पुण्यक्षेत्राणि यानि च पुण्यतीर्थानि प्रयागादिरूपाणि तान्यपि तीर्थीकुर्वन् स्वसबन्धेन पवित्रीकुर्वन् । महापुरुषसबन्धादि

पुण्यक्षेत्रस्य पुण्यतीर्थस्य या पवित्रतातिशयो महाभारतादिषु शाण्डिल्युपाख्यानादौ वैनतेयवृत्तान्तेन स्पष्टीकृतः । नारदस्य च भगवद्भक्ताग्रेसरतया सुप्रसिद्धत्वायुक्तं स्वसंबन्धात्क्षेत्राणां तीर्थानां च पवित्रीकरणम् । अवलोक्य तानि सर्वाण्यपि समन्ताद्विलोक्य तेन च चित्तशुद्धिं चित्तशुद्ध्यतिशयं प्राप्य । इति । अप्पयार्यस्तु 'अपूर्वपुण्यस्थलान्यवलोक्य पुण्यतीर्थानि तीर्थीकुर्वन् पुण्यतीर्थेषु स्नानानि कुर्वन्सन्नित्यर्थः, ततश्चित्तशुद्धिं प्राप्य' इति व्याचष्टे ।

१३०, २. स्थावरजङ्गमनामकैः । स्थावराञ्जङ्गमांश्च नमयन्तीति स्थावरजङ्गमनामकाः तैः ।

१३०, ९. कथं मुक्त्युपाय इत्यस्माकं वक्तव्यम् ।

१३१, ६—७. चतुर्विधब्रह्मचर्यमित्यादि । अत्राश्रमोपनिषद् द्रष्टव्या । षड्विधगार्हस्थ्यम् । आश्रमोपनिषदुक्ताश्चत्वार, बोधायनोक्ताश्च कपोतवृत्तयः सिद्धेच्छावृत्तयश्चेति द्वौ । अप्पयार्यस्तु 'यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाख्यवृत्तिभेदेन षड्विधत्वम्' इति व्याचष्टे ।

१३३, ३. मदिष्टम् । मया ज्ञातुमभीप्सितमित्यर्थः ।

१३५, ४—५. निकरविरहितेत्यादि । निकरविरहितस्य तस्याश्रमस्योचित तुल्यमिति विग्रहः । निकरविरहितस्य हिरण्यादिसंचयहीनस्येत्यर्थः ।

१३६, ४—७. अन्ध इत्यादि । पूर्वजन्मकृतनानाविधपापनिमित्तं लक्षणं यस्य वर्तते स [आतुरवर्जं] सन्यासानर्हः । मर्त्ये

हि । ' अथ नरकानुभूतदु खाना तिर्यक्त्वमुत्तीर्णाना मनुष्येषु लक्षणानि भवन्ति । कुप्रयतिपातकी । ब्रह्महा यक्ष्मी । सुराप श्यावदन्तक । सुवर्णहार कुनख । धान्यचौरोऽङ्गहीन , मिश्रचारोऽतिरिक्ताङ्ग । वागपहारको मूक । उन्मत्तोऽग्निद । गोत्रम्बन्ध । समय भेत्ता खल्वाट ।' इत्यादि (विष्णुस्मृतौ ४५ अ ) । एव पण्डश्रणानप्यनर्हा तयोरजितेन्द्रियत्वात् । पुन पतितादयश्च सन्यासानर्हा । पापण्ड वेदनिन्दक । चक्री लिङ्गी । तप्तचक्राङ्कनधारी वैष्णव पाञ्चरात्री तथा लिङ्गधारी ग्रव वीरतन्त्रप्रविष्ट । तयोश्चक्रलिङ्गयोस्त्यागस्यामरण निषिद्धत्वात् सर्वत्यागरूपे सन्यासे नाधिकृताविवर्थ । स्मर्यतेऽपि ' वृद्धश्रावकनिर्गूढा पञ्चरात्रविदो जना । कापालिका पाशुपता पापण्डाश्चैव तद्विधा ॥' इति (औशनसस्मृतौ ४ अध्याये श्राद्धेषु वर्ज्याना कथने) । वैखानसहराद्विजौ । वैखानसतन्त्रोक्तक्रमेण तथा शैवतन्त्रोक्तक्रमेण या देवपूजा वेतनग्रहणेन कुरुतस्तौ । भृतकाध्यापक कृतवेतनो वेदाध्यापक । शिपिविष्ट खल्वाट ।

१३६, ८ पूर्वसन्यासी । येन पारहम्यात्पूर्वभावी कुटीचकादिसन्यास कृत स ।

१३७, २ द्विनिर्वारेण सन्यस्त । सन्यासाद्वार्हस्थ्य प्रत्यागत इत्यर्थ । स्मर्यते हि । ' ये प्रत्यवसिता विप्रा प्रव्रज्याग्निजलादिषु । अनाशकनिवृत्ताश्च गृहस्थत्व चिकीर्षव ॥ चरेयु-

स्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि वा । जातकर्मादिभि सर्वे पुन सस्कारभागिन ॥' इति (आपस्तम्बस्मृतौ ९, ७—८) ।

१३८, ११ सराग इति वक्तव्ये सरक्त इति छान्दस पाठो लेखकाना प्रमादो वा ।

१४३, ८ सप्तद्वारावकीर्णा चेत्यादि । 'श्रोत्राभ्या नेत्राभ्या नासिकाभ्या जिह्वया चावकीर्णा सप्त्यासाम अनृता च वाच न वदेत्' (अप्प०) । शब्दादीन्द्रियार्थविषयिणीमत एवानृतपरा वाच नोच्चारयेदिति भाव । कुल्लूकस्तु 'सप्तद्वारावकीर्णामिति चक्षुरादीनि पञ्च बहिर्बुद्धीन्द्रियाणि मनो बुद्धिरित्य त करणद्वयम्' इति (मनुस्मृतौ ६, ४८) ।

१४५, १—२ प्रियेष्वित्यादि । 'स्व रागद्वेषविनिर्मुक्तस्य प्रियाप्रियजना भवेयुरिति चेन्नष दोष, तत्तज्जनदृष्ट्यास्य प्रियाप्रिय जनवत्त्वोपपत्ते' इत्यप्प ।

१४५, ६ सिद्धिमित्यादि । 'एकस्यैव सिद्धिरिति सिद्धि मेकस्यासहायस्य पश्यन्' 'न जहाति न क्वचित् पुत्रादिस्तेन त्यक्तो भवति, अतो न हीयते न वियुज्यते पुत्रादिभि तद्वियोगदु ख नासादयति' इति सर्वज्ञनारायणमेधातिथी (मनुस्मृतौ ६, ४२) ।

१४९, ७—८ मुख्यवृत्तिकाम मोक्षाश्रम प्रविविक्षु ।

१४९, ६ — १५१, ४ अय भागो जाबालोपनिषट्टिप्पण्यवसरे प्रायशो व्याख्यात ।

१५०, १० द्वयमे मन्यासमुपन्यस्यति आहवनीयादित्यादिना । आहवनीयादग्निमाहृत्य । गार्हपत्यमकाशमिति शेष. ।

१५०, ११. अनग्नि यत् यदि श्रोत्रियगृहस्यासनिधानात् शुद्धमग्निं न विन्देत् तर्हि अप्सु जुहुयात् ।

१५१, २. मन्त्रान्तरम् । प्रणवादन्य मन्त्रामित्यर्थ ।

१५१, ७ — १५३, २ सर्वमेतद्ब्रह्मोपनिषद्यपि श्रूयते (८५ —८७ पृ°) ।

१५३, ३ — १५६, १ अथ भाग प्रायश परमहंसनाम्नो पनिषदोरनुवाद एव ।

१५३, ५ अथवा यथा विधि भवति तथा चेत् तर्हि जातरूपधर इत्यादि ।

१५३, १२—१३ यद् अन्त मानसिक यच्च बहि देहादि वर्तते तत् सर्व स्वव्यतिरिक्तममन्यमान आत्मैवेति मन्यमान ।

१५५, १०—११. ब्रह्मप्रणवमनुस्मरन् भ्रमरकीटन्यायेन शरीर त्रयमुत्सृज्य । भ्रमरकीटन्याय उक्तो भागवते । 'यत्र यत्र मनो देही धारयेत्सकल धिया । स्नेहाद् द्वेषाद् भयाद्वापि याति तत्तत्स्वरूपताम् ॥ कीट पेशस्कृत ध्यायन् कुड्य* तेन प्रवेशित । याति तत्सात्मता राजन् पूर्वरूपमसत्यजन् ॥' इति (११, ९,

* कुड्यामित्यपपाठ । Boehtlingk (PW, *sub* १० *e*) referring to *gaṇa* कड्यादि, Pān IV, 2, 95, mistakes कुड्या for कुड्य

२२ — २३) । 'पूर्वरूपमसत्यजन्विलसनेन कैमुत्यन्यायो विवक्षित । पूर्वरूपमसत्यजन्मेन याति किमुत सत्यजन्नियर्थः ।' इति तद्व्याख्याने श्रीमद्वीरराघवाचार्यः । शरीरत्रय स्थूलसूक्ष्मकारणशरीराणि ।

१५४, १०—११. सन्यासेनेर नान्याश्रमेण ।

१६०, ४ — ५. त्वड्मासेत्यादि । त्वड्मासादिसहतिरूपे विण्मूत्राम्या दुर्गन्धे च देहे प्रीतिं कुर्वाणाना, जनानामिति शेप, क्रिमीणा कीटाना च कियदन्तरग अन्तर नास्तीत्यर्थ. । देहाभिमानरहिता एवोत्कृष्टा इति भाव ।

१६१, ७. निरर्थक गौण. ।

१६१, ८—९. य न सन्तमित्यादि । यः ससारातीतोऽवधूत 'जाग्रदपि सुपुप्तस्थः, जीवन्नेव मृतोपम ' इति वचनादस्तित्वनास्तित्वादिपदै. केनापि वक्तुमशक्यस्तम् । वक्ष्यत्यपि 'सदिग्धः सर्वभूतानाम्' इति ।

१६३, ५—६. सर्वत्रेत्यादि । श्राद्धे श्राद्धे मतिदेवादि द्वौ ब्राह्मणौ भोजनीयावित्यर्थ । यथा — वैश्वदेवे चत्वारः, मनुप्यश्राद्धे दश, भूतश्राद्धे चत्वारिंशत्, अन्येपु पट्, आहत्य नवति. । अष्टाध्वरपक्षे तु प्रतिश्राद्ध वैश्वदेवस्यावदयस्त्वादाहत्याष्टादशोत्तरशतमिति ज्ञेयम् ।

१६३, ६—९. एकाध्वरपक्षे एकदिनेऽष्टाध्वरपक्षेऽष्टदिनेपु वाष्टश्राद्धानि भुक्त्यन्त यथाविधि निर्वर्त्येति योजना ।

१६३, १० — १६४, ३. शेषकर्मसिद्ध्यर्थं शिखाविसर्जनादेः शेषकर्मण. सिद्ध्यर्थं सप्तकेशान्विसृज्य वर्जयित्वेति वचनात् शेषकर्मसिद्ध्यर्थमित्यादेः शाखान्तरवचनाच्च सप्तकेशान्संरक्ष्येति द्रष्टव्यम् ।

१६४. ६ स्वशाखोपसंहरणं कृत्वा स्वशाखाध्यायमुपसंहृत्य ।

१६४, ८. आत्मादिभिः आत्मना अन्तरात्मना परमात्मना । आत्मादीनुद्दिश्येत्यर्थः ।

१६५, ७. हे अग्निदेव यज्ञाग्निर्भूत्वा आत्मा स्वयम् आत्मानं मदीयं कोष्ठाग्निं प्रविशेत्यर्थः ।

१६५, ९. स्वा योनिं प्राणाग्निं कोष्ठाग्निमिति यावत्, 'एष वा अग्नेर्योनिर्यः प्राणः' इति श्रुत्यन्तरात् (६६ पृ°) ।

१६५, १०. सक्षय एहीत्यनेन समारोपणीयाग्निना सहाग्निदेवतायाः कोष्ठाग्नौ प्रवेशोऽभ्यर्थ्यते ।

१६९, ६. तारक अष्टमोपदेशे वर्णयिष्यमाणं संसारात् तारकमोंकारम् ।

१६९, १२. अकाकपृष्ठम् । काकपृष्ठं नाम कृष्णचिह्नरूपो वेणोर्दोष, तद्रहितम् ।

१७०, १२ — १७१, ५. भगवन्नित्यादि । ननु कथं कर्माण्यकुर्वन्पुरुष स्वाश्रमाचारपरो भवेदित्यत्रोच्यते — पुरुषेतरे जन्तवः कर्मप्रवर्तका एव सन्तीति सत्यम्, अवस्थाचतुष्टयाधीना कर्मज्ञानवैराग्यप्रवर्तकाश्च पुरुषा जन्तव. पुरुषा ये जन्तवस्ते तु तदनु-

कुलाचाराः केचित्कर्मपरा अन्ये ज्ञानादिपराः सन्तीति भावः ।

१७१, ९—१०. अज्ञानेन ज्ञानाज्ञाननिमित्तेन विद्वद्विविदिषासंन्यासाविति द्वौ, अशक्तिवशात् कर्मलोपतश्च अशक्तिनिमित्तककर्मसंकोचाच्च तृतीय आतुरसंन्यासः, इति त्रैविध्यम् ।

१७२, २—३. पुण्यलोकानुभवश्रवणात् । पुण्यलोकानुभवस्यानित्यत्वश्रवणादित्यर्थः ।

१७५, १—२. एकशाटीधरो वा । कौपीनरहितस्त्विति शेषः ।

१७५, ८—९. जीवत आतुरस्य क्रमसंन्यासे दृष्टान्तमाह ब्रह्मचर्येत्यादिना । कुटीचकादीनां संन्यासविधिः ब्रह्मचर्याश्रमादितुरीयाश्रमवत् ब्रह्मचर्याश्रममारभ्य संन्यासाश्रमस्वीकारपर्यन्तं यः प्रकारः तत्तुल्यो भवति ।

१७६, २. नकन्थालेशः कन्थालेशेनापि रहितः ।

१७६, २—३. नाध्येतव्यो न वक्तव्यो, कर्मकाण्ड इति शेषः, न श्रोतव्यमन्यत्किंचित्, वेदान्तादिति शेषः

१७६, ६. नान्यभाषाविशेषेण । यद्यवश्यं वक्तव्यं स्यात् तर्हि संस्कृतभाषयैव वक्तव्यं नान्यभाषाविशेषेण तासां विगानात् ।

१७७, ३—५. तुरीयातीतावधूतयोर्न ज्येष्ठः ज्येष्ठकनिष्ठभेदो न विद्यते ज्ञानतारतम्यस्य तत्राभावात् । अन्येषु तु यो न स्वरूपज्ञ इत्यादि ।

१७७, ८. सांकर्यं ज्ञानकर्ममार्गयोः संमेलनमतः पातित्यम् ।

१७७, १० — १७८, २. आतुरकुटीचकयोर्भूर्लोकभुवर्लोका-

मित्यादि । आतुरो मृत्वा शीघ्रमेव शुचीना गृहे जन्म प्राप्या नन्तर कुटीचको भवति । 'तूर्णमेव जगत्यामभिसपद्यते' इत्यादि श्रुते (प्रश्नोप॰ ५, ३) । कुटीचकस्तु सोमलोके महिमानमनुभूयै वेह जन्म लभते तदन्ते च बहूदको भवति । 'स सोमलोके विभूतिमनुभूय पुनरावर्तते' इति श्रुते (प्रश्नोप॰ ५, ४) । एव द्वयोरेतयोर्मनुष्यलोकप्रत्यागमनमवर्जनीयम् । बहूदकस्तु स्वर्गलोके बहु काल प्रत्युष्य तपोलोक गत्वा तत्रापि चिरमुषित्वा सत्यलोक प्राप्या न्ते ब्रह्मणा सह मुच्यते । हसवृत्तान्तोऽप्येतदनुरोधेन द्रष्टव्य । तुरीयातीतावधूतयोस्तु 'तुरीयातीतावधूतयोर्न ज्येष्ठ' इति पूर्वोक्त श्रुतिवशाद्गतिभेदोऽपि नास्ति किंत्वेकमेव कैवल्यमुभाभ्यामपि प्राप्यत इति भाव । दत्तात्रेयसहितायामपि प्रायशोऽयमर्थो दृश्यते । तत्र तु योग्याख्यस्य परमहसादित्रयस्य सद्योमुक्ति इतरत्रयस्य च क्रम मुक्तिरुच्यते । 'योगिनाममृत स्थान पुनरावृत्तिवर्जितम् । अन्येषा ब्रह्मण स्थान मुच्यन्ते ब्रह्मणा सह ॥' इति (२, ४४, २—३) ।

१७८, ११—१३ तासु अवस्थासु चतुर्दशकरणाना चक्षु रादीना दशाना बाह्येन्द्रियाणा वक्ष्यमाणस्यान्त करणस्य च बाह्यवृत्तयोऽन्तर्वृत्तयश्च, प्रादुर्भवन्तीति शेष । तेषा बाह्यवृत्तीनाम् । पुस्त्व छान्दसम्, 'वृत्तयश्चत्वार' इति वक्ष्यमाणवाक्यानुरोधेन । उपादानकारण मनो बुद्धिरहकारश्चित्त चेति वृत्तयश्चत्वार सन्ति ।

१७९, १२ इतरशास्त्रप्रवृत्ति वेदान्तव्यतिरिक्तशास्त्रे व्यापार ।

१७९, १३—१८०, १. चर्मकारवदतिविदूरकर्मा । चर्मकारस्य वेदोक्तकर्मस्वधिकारो यथा नास्ति तथा परमहंसादपि कर्मातिदूरमित्यर्थः । तथा आचारविचादूरः सः । आचारविद्याभ्यां दूरस्थ इत्यर्थः ।

१८०, २—५. अतः कारणाद् एरण्डतैलफेनवत् तत्प्रसक्तं कर्मसंबन्धि सर्वं परित्यज्य मनोदण्डं करपात्रं दिगम्बरं मनसि दृष्ट्वेत्यादि । एरण्डतैलफेनवत् । यथा हि कस्मिंश्चित्पात्रे एरण्डतैले पूरयितव्ये उपरि प्लवमानस्य फेनस्य पूरणप्रतिबन्धनकरतया हस्तादिभिर्निरासः क्रियते स्वाभीप्सितप्रतिबन्धकत्वात् एवमेव संन्यासिनामभिलषितमोक्षाणां मोक्षप्रतिबन्धकीभूतं कर्मात्यन्तं निरसनीयमित्यर्थः ।

१८१, १. प्रतिष्ठा ख्यातिः ।

१८१, ८. मात्रासङ्गाद्विनिर्गतः । भिक्षापात्रादिषु सङ्गरहितः । यथोक्तं वसिष्ठेन । 'न कुण्ड्यां नोदके सङ्गो न चेले च त्रिपुष्करे । नागारे नासने नान्ने यस्य वै मोक्षवित्तु सः ॥' इति (या॰) ।

१८१, ९. अभिपूजितलाभान् । मधुरवचनैः प्राप्तान् दत्तान्वा सर्वप्रशस्तान्वा भिक्षादिलाभान् ।

१८३, १२. अध्वा सूर्येण निर्दिष्टः । पथिप्रश्नं न कुर्यादिति भावः । विमुक्तमार्गो भवेदिति श्रुत्यन्तरात् ।

१८४, ३. पक्षं कंचन नाश्रयेत् । तदुक्तं कपिलेन । 'नैकदेवतापक्षपातित्वं दर्शयेत्' इति (या) ।

१८६, ७. चरेत् गुरोः समीपे व्रतं चरेदित्यर्थः (१९६ ५°, १५°)।

१८६, ८. प्रव्रज्य दिगम्बरो भूत्वा । 'संन्यस्याथ दिगम्बरः' 'संन्यासकाले त्वलंबुद्धिपर्यन्तमधीत्य तदनन्तरं ··· जातरूपधरश्चरेन्नकन्थालेशः' इत्यादिपूर्वोक्तश्रुतिवशात् (१६९, २ ; १७५, १३—१७६, २)।

१८७, ८—९. तदभ्यासवशात् स्वरूपानुसंधानेन । भ्रमरकीटन्यायवत् । मुच्यत इत्युक्तमिति शेषः ।

१८७, १३. पञ्चविंशतितत्त्वानि सांख्यशास्त्रे प्रसिद्धानि ।

१८८, १. शाखाः मार्गाः ।

१८८, २—३. पङ्कस्तम्भाकाराणि अधोगमने हेतुभूतानीति भावः ।

१८९, ३. चतस्रोऽवस्थाः वक्ष्यमाणाः (१९०, ९—१९१, १)।

१८९, ३—४. एकैककरणाधीनानाम् एकैकवृत्तिसाधनभूतानां चतुर्दशकरणानां सान्तःकरणदशबाह्येन्द्रियाणां वक्ष्यमाणप्रकारेण चक्षुरादीनां व्यापाराः रूपग्रहणादिवृत्तयः सन्ति ।

१८९, ८. तदधीना तत्सव्यपेक्षेत्यर्थः ।

१८९, १०. चित्तेन चेतयतीत्यनेन मनसा संकल्पयतीत्यप्युपलक्ष्यत इति बोध्यम् ।

१८९, १०—११. विसृज्य अनादृत्य, 'इन्द्रियाणां पृथग्भाव-

मुदयास्तमयौ च यत् । पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥' इति (काठ० उप० ६, ६) श्रुत्यनुरोधेन यथान्यायमनभिज्ञायेत्यर्थः । एतान् उक्तान् व्यापारादीन् ।

१९०, ५. वक्त्रम् । उक्तमष्टदलस्य पद्मस्य सूर्याभिमुखं भागम् ।

१९०, ५. जीवदवस्थाः । अपि ज्ञेया वक्ष्यमाणप्रकारेणेति शेषः ।

१९०, ९. नो चेत् । प्रकारान्तरमपेक्ष्येत चेदित्यर्थः ।

१९०, ९ — १९१, १. जाग्रज्जाग्रत् जाग्रत्स्वप्नः जाग्रत्सुषुप्तिः जाग्रत्तुरीयम् । स्वप्नजाग्रत् स्वप्नस्वप्नः स्वप्नसुषुप्तिः स्वप्नतुरीयम् । इत्यादि । ताश्च षोडशावस्था श्रीरामगीतासु त्रयोदशाध्याये 'इदं ममेति सर्वेषु दृश्यभावेष्वभावना । जाग्रज्जाग्रदिति प्राहुर्महान्तो वायुनन्दन ॥' इत्यादिभिः षोडशश्लोकैः प्रत्येकं व्याख्याता दृश्यन्ते ।

१९१, ३—४. उत्तटस्थ इत्यादि । ननु यथा तटस्थः तुरीयः तथोत्तटस्थः साक्षी केनापि प्रकारेण भोक्ता स्यात् तटस्थकूटस्थादिशब्दानामपि प्रायशः साक्षिपरत्वेन प्रयुज्यमानत्वादित्याशङ्क्याह उत्तटस्थ इत्यादि । तटस्थमुद्गत इत्युत्तटस्थः । स न द्रष्टा । कस्मात् । अदृष्टत्वात् अपरोक्षत्वात् द्वैतातीतत्वादिति यावत् । 'अदृष्टमग्राह्यम् . शिवमद्वैतम्' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिश्रुतिभ्यः (मा० उप० ७, बृहदा० उप० ४, ५, १५)। अथवा अदृष्टत्वात् स्वेनादृश्यमानत्वादित्यर्थः । 'दृष्टः किमद्वयेन'

'दृश्यते चेन्नात्मज्ञा' इति श्रुते (नृसिंहोत्त' उप' ९), अस्य चार्थस्तु । 'तटस्थादूर्ध्वं वर्तन इत्युक्तटस्थ. तुरीयजीवातीत परमात्मेत्यर्थः । स न द्रष्टा स्यात् । कस्मात् । अदृष्टत्वात् । तथा हि । जीव कर्तृत्वभोक्तृत्वाहङ्कारादिभि. स्पृष्टो दृश्यते, अहं कर्ता भोक्तेत्यादिदर्शनात् । जीवेतरस्तु परमात्मा तै कर्तृत्वभोक्तृत्वादिभिर्न स्पृष्टो दृश्यते, चतुर्दशकरणातीतत्वेन कर्तृत्वाद्यदर्शनात् । तस्मात् परमात्मा न द्रष्टैव' इति ।

१९१, ८. व्यवधाने व्यवच्छेदे । सतीति शेष. ।

१९२, १. न शरीराभिमानी भवति । य इति शेष. ।

१९२, ८. महाजनेषु जनसमूहेषु ।

१९३, १ दण्डभिक्षाम् । 'काष्ठदण्डो धृतो येन' इत्यादिश्रुत्यन्तरात् (५० पृ) । लघुविष्णुस्मृतिरपि । 'त्रिदण्ड लिङ्गमाश्रित्य जीवन्ति बहवो द्विजा । न तेषामपवर्गोऽस्ति लिङ्गमात्रोपजीविनाम् ॥' इति (४, ३४) । व्यसनम् औत्सुक्यम् ।

१९३, ३. वासनात् ज्ञानात् ज्ञानपूर्वम् । नियमादित्यस्य° ।

१९४, ५ तथा नान्यच्च । ननु विधिनिषेधाद्यभावे हिंसादीना लौकिकव्यापाराणा यथेच्छचरण प्रसज्येतेत्यत्रोच्यते तथा नान्यच्च इतरत् विपरीतमपि नेत्यर्थ (१९७ पृ° ५ प) ।

१९५, १२. 'सव सरमित्युपलक्षणम् । यान ज्ञान तावन्निसेवेत्, गुरुसमीपवासस्य ज्ञानार्थत्वात्,। इति मा° ।

१९६, २—७. प्राप्येत्यादि । अत्र प्रथमः श्लोको विधिः द्वितीयतृतीयौ चानुवादौ । अथवा प्रथमश्लोकस्य दृढीकरणाय विवरणाय वा श्रुत्यन्तरात् 'ततः' इत्यादि श्लोकद्वयमुदाहरति ।

१९६, ५. आश्रमत्रयं कुटीचकहंसपरमहंसाश्रमान्, तेषां मध्ये यस्मिन् तिष्ठति तमिति भावः ।

१९७, २. साधनं शान्तिकर्म ।

१९८, ५. पुरस्कृत्य साधु पृष्टमिति प्रशस्य ।

१९८, ७ — १९९, १. स्वगमननिरोधग्रहणं न कुर्यात् । ग्रहणम् अङ्गीकारः । मा गच्छ भगवन् कृपयास्मद्गृहे तिष्ठेत्यादिवचनैः क्रियमाणं स्वगमनस्य निरोधं नाङ्गीकुर्यादित्यर्थः ।

२००, ७. विस्मृतपदार्थपुनःप्राप्तिहर्ष इव । विस्मृतस्य पदार्थस्य पुनर्लाभेन जनितो हर्षो यस्य स इवेत्यर्थः । अत्र विस्मृतपदार्थः परमात्मस्थानीयः, 'एषां सक्तस्तु भूतात्मा न स्मरेच्च परं पदम्' इति श्रुत्यन्तरात् (११० पृ॰ २ प॰) ।

२०५, ३. अन्याधिकारः देवान्तरविषयो जपाद्यधिकारः ।

२०५, ६—७. मानुषप्रणवः, आन्तरप्रणवः, ब्रह्मप्रणवः । अष्टमोपदेशे वक्ष्यमाणं प्रणवत्रयम् । मानुषप्रणवो बाह्यप्रणवः । ब्रह्मप्रणवो विराट्प्रणवः ।

२०६, २—३. संसारतारकं तारकमनुस्मरन् । 'संसारात्तारयतीति तत्तारकं ब्रह्मस्वरूपाभिन्नं तारकसंज्ञं प्रणवमनुस्मरन् सन्' इत्यप्प॰ ।

२०६, ७—९. तथेत्यादि । अत्रायमन्वय । तथेति परमेष्ठी ओमिति ब्रह्मेति तैत्तिरीयवाक्येन (उप० १, ८, १) व्यष्टिसमष्टि-प्रकारेण वक्तुमुपचक्रमे इति । प्रणवमिति शेष. ।

२०६, ८ — २०७, ४. का व्यष्टिरित्यादि । का व्यष्टिः का समष्टिः इति प्रश्नयोर्यथाक्रममुत्तरमाह सहारप्रणव इति । तत्र सहारप्रणव इत्यादौ अर्धमात्राप्रणव इत्यन्ते का व्यष्टिरिति प्रश्न-स्योत्तरे मतचतुष्टयानुसारेण नाम्नि क्रमे च भिन्नमन्यथा त्वभिन्न त्रैविध्यचतुष्टय दर्शयति । तत्र प्रथमक्रमानुरोधेनेतराणि त्रिकाण्यपि निवेशनीयानि यथा—

| सहार. | सृष्टि | अन्तर्बहिश्च |
| --- | --- | --- |
| अन्तः | व्यावहारिक. | ब्रह्म |
| आर्ष | बाह्य | विराट् |
| सहार | ब्रह्म | अर्धमात्रा इति । |

का समष्टिरिति प्रश्नस्योत्तर वदति ओमिति ब्रह्मेति । ओंकारो यथा अकारादित्रयस्योपसहारो भवति तथा सहारादित्रयाणामैक्य पर ब्रह्मेत्यर्थ ।

२०७, ५ — २०९, ४. ओमित्येकाक्षरम् —— ब्रह्मप्रणवः । अथ त्रीन्प्रणवान्विशदयति ओमित्येकाक्षरमित्यादिना गद्यस्यावशिष्टभागेन, प्रथमतोऽष्टाङ्गमन्त प्रणव ततश्चतुरङ्ग बाह्यप्रणव तत. षोडशाङ्ग विराट्प्रणवम् । अत्र यो य उत्कृष्टस्तस्मिंस्तस्मिन्नवरोऽन्तर्गत इति

ज्ञेयम् । तथा हि । बाह्यप्रणवस्याकाराद्यर्धमात्रान्ताश्चत्वारो भागाः सन्ति, अन्तःप्रणवस्य तु त एवाधिकाश्च नादाद्याश्चत्वारः, विराट्-प्रणवस्य चोक्ता अष्टावधिकाश्च शान्त्याद्या अष्टौ । इति ।

२०७, ५—९. अथ ओमित्येकाक्षरमित्यादिना अनन्तावयवाकारः इत्यन्तेन ग्रन्थेनान्तःप्रणवं तदन्तर्गतं बाह्यप्रणवं च विशिनष्टि । तत्र उक्तेऽष्टके चत्वारः आद्याश्चत्वारः । बाह्यप्रणवघटकाः सन्तीति शेषः । तेषां स्वरूपमाह अकारश्चेति । अत्रावयवगता-युतत्वादिकं कालसूक्ष्मांशानुसारेण बोध्य, न तु मात्रानुसारेण । इदमपि स्थूलसूक्ष्मकारणतुरीयत्वावलम्बनेन ग्राह्यम् ।

२०७, १० — २०८, २. अथ विराट्प्रणववर्णनमवतारयति सगुणोत्पत्तिप्रणव इत्यादिना । सगुणोत्पत्तिप्रणवः सगुण उत्पत्तिप्रणवः । संधिश्छान्दसः । विराट्प्रणवस्योभयात्मकत्वे दृष्टान्तमाह यथा प्लुत इत्यादिना । तथा हि । 'ह्रस्वा तु प्रथमा मात्रा द्वितीया दीर्घसंयुता । तृतीया तु प्लुता' (मार्क॰ पु॰ ४२, १३,) इत्यादिस्मृतीना-मनुरोधेन मकारस्थानीयो विराट् अकारोकारापेक्षया प्लुतः मात्रात्रयात्मकः, ओंकारनिर्वर्तकत्वापेक्षया च प्लुतसंहारः प्लुतोपसंहाररूपः ।

२०८, ३ — २०९, ४. अथ विराट्प्रणवं वर्णयति विराट्-प्रणव इत्यादिना । षट्त्रिंशत्तत्त्वातीत इति । षट्त्रिंशत्तत्त्वानि श्रूयन्ते वराहोपनिषदारम्भे । तानि यथा — सांख्यशास्त्रे प्रसिद्धानि पञ्चविंशतिः, प्राणपञ्चकं, देहत्रयम्, अवस्थात्रयं चेति । पुनश्चतुः-

२०६, ७—९ तथेत्यादि । अत्रायमन्वय । तथेति परमेष्ठी ओमिति ब्रह्मेति तैत्तिरीयवाक्येन (उप० १, ८, १) व्यष्टिसमष्टि-प्रकारेण वक्तुमुपचक्रमे इति । प्रणवमिति शेष ।

२०६, ८ — २०७, ४. का व्यष्टिरित्यादि । का व्यष्टि का समष्टि इति प्रश्नयोर्यथाक्रममुत्तरमाह सहारप्रणव इति । तत्र सहारप्रणव इत्यादौ अर्धमात्राप्रणव इत्यन्ते का व्यष्टिरिति प्रश्नस्योत्तरे मतचतुष्टयानुसारेण नाम्नि क्रमे च भिन्नमन्यथा त्वभिन्न त्रैविध्यचतुष्टय दर्शयति । तत्र प्रथमक्रमानुरोधेनेतराणि त्रिकाण्यपि निवेशनीयानि यथा—

| | | | |
|---|---|---|---|
| सहार | सृष्टि | अन्तर्बहिश्च | |
| अन्त. | व्यावहारिक | ब्रह्म | |
| आर्ष | बाह्य | विराट् | |
| सहार | ब्रह्मा | अर्धमात्रा | इति । |

का समष्टिरिति प्रश्नस्योत्तर वदति ओमिति ब्रह्मेति । ओंकारो यथा अकारादित्रयस्योपसहारो भवति तथा सहारादित्रयाणामैक्य पर ब्रह्मेत्यर्थ ।

२०७, ५ — २०९, ४ ओमित्येकाक्षरम् —— ब्रह्मप्रणव । अथ त्रीन्प्रणवान्विशदयति ओमित्येकाक्षरमित्यादिना गद्यस्यावशिष्टभागेन, प्रथमतोऽष्टाङ्गमन्त प्रणव ततश्चतुरङ्ग बाह्यप्रणव तत षोडशाङ्ग विराट्प्रणवम् । अत्र यो य उत्कृष्टस्तस्मिंस्तस्मिन्नवरोऽन्तर्गत इति

ज्ञेयम् । तथा हि । बाह्यप्रणवस्याकाराद्यर्धमात्रान्ताश्चत्वारो भागा सन्ति, अन्तःप्रणवस्य तु त एवाधिकाश्च नादाद्याश्चत्वार., विराट्-प्रणवस्य चोक्ता अष्टावधिकाश्च शान्त्याद्या अष्टौ । इति ।

२०७, ५—९. अथ ओमित्येकाक्षरमित्यादिना अनन्तात्मयवाकर इत्यन्तेन ग्रन्थेनान्तःप्रणव तदन्तर्गत बाह्यप्रणव च विशिनष्टि । तत्र उक्तेऽष्टके चत्वार आद्याश्चत्वार । बाह्यप्रणवघटका. सन्तीति शेष । तेषा स्वरूपमाह अकारश्चेति । अलावयवगतां-युतत्वादिक कालसूक्ष्माशानुसारेण बोध्य, न तु मात्रानुसारेण । इदमपि स्थूलसूक्ष्मकारणतुरीयत्वावलम्बनेन ग्राह्यम् ।

२०७, १० — २०८, २. अथ विराट्प्रणववर्णनमवतारयति सगुणोत्पत्तिप्रणव इत्यादिना । सगुणोत्पत्तिप्रणवः सगुण उत्पत्तिप्रणव । साधिश्छान्दस । विराट्प्रणवस्योभयात्मकत्वे दृष्टान्तमाह यथा प्लुत इत्यादिना । तथा हि । 'ह्रस्वा तु प्रथमा मात्रा द्वितीया दीर्घसयुता । तृतीया तु प्लुता' (मार्क॰ पु॰ ४२, १३,) इत्यादिस्मृतीना-मनुरोधेन मकारस्थानीयो विराट् अकारोकारापेक्षया प्लुत. मात्रात्रयात्मक, ओंकारनिर्वर्तकत्वापेक्षया च प्लुतसहार प्लुतोपसहाररूप. ।

२०८, ३ — २०९, ४. अथ विराट्प्रणव वर्णयति विराट्-प्रणव इत्यादिना । षट्त्रिंशत्तत्वातीत इति । षट्त्रिंशत्तत्त्वानि श्रूयन्ते वराहोपनिषदारम्भे । तानि यथा — सांख्यशास्त्रे प्रसिद्धानि पञ्चविंशति, प्राणपञ्चक, देहत्रयम्, अवस्थात्रय चेति । पुनश्चतु-

षष्टिमात्र इत्यादि । अस्यार्थ सम्यगाख्यात श्रीरामगीतासु त्रयोदशाध्याये श्लोकषट्के यथा —

अकार प्रथम प्रोक्त उकारस्तदनन्तरम् ।
मकारश्चार्धमात्रा च नादबिन्दू तत परम् ॥
कला तत कलातीता शान्ति शान्ते. परा तत ।
उन्मन्येकादशी प्रोक्ता द्वादशी तु मनोन्मनी ॥
पुरी च मध्यमा पश्चात्पश्यन्ती च परा तत. ।
एव षोडशरूपोऽय प्रणव. सूक्ष्ममात्रक ॥
एतासा च स्थूलसूक्ष्मबीजतुर्यप्रभेदत. ।
मात्राणा स्युश्चतु षष्टिरूपाणि परनामज ॥
प्रकृत्या पुरुषेणैता अष्टाविंशतिगोचरा ।
शतमात्राश्च सिध्यन्ति द्वैविध्य समुपाश्रिता ॥
ततो द्विशतमात्रा. स्यु षट्पञ्चाशत्पराश्च ता ।
द्वैविध्य सगुणेनापि निर्गुणेन समाश्रिता ॥ इति ।

२०९, ६ सर्वप्रपञ्चाधारगर्भित । अखिलानामपि प्रपञ्चाधार भूताना शक्तीना योनिभूत । अय प्रणव इति शेष, एवमुत्तर श्लोकेऽपि ।

२०९, ८. सर्वश्रुत्युत्तम । 'यश्छन्दसामृषभ ' इत्यादिश्रुते । मृग्य अन्वेषणीय । योगिभिरिति शेष ।

२०९, ९—१० यच्च भूत भव्य भविष्यदिति हेतो ति

कालोदितं त्रिकालेऽप्युद्गतमाविर्भूतम् अव्ययं तदपीत्यादि ।

२१०, १—२. तथा एवं च तदेकममृतमजरं पूर्वोक्तमव्ययम् ओमिति प्रणवेन अनुभूय साक्षात्कृत्वा, अनन्तरं ब्रह्मशब्देन वर्णितं तदेतदेव आत्मानं विद्धीत्यनुषङ्गेण शेषस्य पूरणम् ।

२१०, ३—४. तथा पुनश्च सशरीरं शरीरत्रयसहितं तम् उक्तम् आत्मानम् ओमिति प्रणवेन तन्मयत्वं ब्रह्ममयत्वं समारोप्य ध्यानेन नीत्वा, अनन्तरमशरीरं परं ब्रह्म वक्ष्यमाणं तुरीयतुरीयं विनिश्चिनु अवधारय ।

२१०, ५—७ परं ब्रह्मेत्यादिना सपादश्लोकेन ब्रह्मणः विश्वादीनां क्रमक्रमात् विश्वादिक्रमानुसारेण ध्यानमाह । स च प्रकारः—स्थूलशरीराभिमानात्स्थूलत्वं, स्थूलविषयभोगात्स्थूलभुक्त्वमिति हेतुद्वयेन विश्वः । एवमेवोत्तरत्रापि द्रष्टव्यम् ।

२१०, ७. तर्हि त्रिविधोऽयमात्मेत्याशङ्क्याह सोऽयमात्मा चतुर्विध इति । वक्ष्यमाणप्रकारेणेति शेषः ।

२१०, ८ — २११, १. प्रथमं पादमाह चतुष्पादित्यादिना प्रथमः पादः इत्यन्तेन । चतुष्पाज्जागरितस्थः । चतुष्पाच्च तज्जागरितं चेति विशेषणसमासः । जाग्रज्जाग्रत् जाग्रत्स्वप्नः जाग्रत्सुषुप्तिः जाग्रत्तुरीयमिति पूर्वोक्तप्रकारेण चतुष्पदि जागरिते तिष्ठतीति चतुष्पाज्जागरितस्थः विश्वभुक् स्थूलभुक् । एकोनविंशतिमुखः माण्डूक्योपनिषद्भाष्योक्तप्रकारेण । साष्टाङ्गः 'पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा

दशा । वचसा मनसा चैव प्रणामोऽष्टाङ्ग ईरितः' इत्यादिवचनानुरोधात् । अथ प्रकृतः स्थूलभुक् जाग्रज्जाग्रदाद्यवस्थास्थितत्वानुरोधेन स्वयमपि चतुरात्मा 'जागरितस्थानश्चतुरात्मा ··· स्थूलत्वात्सूक्ष्मत्वाद्बीजत्वात्साक्षित्वाच्च' इति श्रुतेः (नृसिंहोत्त० उप० २)। तस्य चैवंविधस्यात्मनो नामानि यथा विश्वः वैश्वानरः पुमान् विश्वजिदिति । अयं प्रथमः पादः ।

२११, १—४. द्वितीयं पादमाह स्वप्नस्थानगतः इत्यादिना उच्यते इत्यन्तेन । स्वतोऽष्टाङ्गः, स्वप्नगतेन पुरुषेण देहस्य स्वतः कल्पितत्वात् । तर्ह्यन्यथापि जागरितस्थाद्भिन्नोऽयं सूक्ष्मप्रज्ञ इत्याशङ्क्याह एको नान्य इति । परन्तप इति नारदस्य संबोधनम् । परं देहं तपति ज्ञानाग्निना दहतीति परन्तपः (परन्तपः जितेन्द्रियः इति शब्दकल्पद्रुमस्थचिन्तामणिवचनात्) । पूर्ववत् सूक्ष्मभुगपि चतुरात्मा । चतुर्णामात्मनां नामानि च तैजस इत्यादि । स्थूलोऽन्तः अन्तर्वर्तमानः स्थूलः स्थूलस्य प्रतिबिम्बभूतः ।

२११, ५ — २१२, १. तृतीयं पादमाह काममित्यादिना भूतानामित्यन्तेन । तथापीत्यादि । अयमानन्दभुक् चेतोमुखः (गाण्डूक्यवचनमेतदपि) तथापि 'एकीभूत.' इत्युक्तेऽपि चतुरात्मैव भवति यथा — सुषुप्तिजाग्रदवस्थायां स्थूलप्राज्ञः, सुषुप्तिस्वप्नावस्थायां सूक्ष्मप्राज्ञः, इत्यादि पूर्ववत् । चतुर्णामात्मनां नामान्तराणि च सर्वगतः अव्ययः ईश्वरः प्राज्ञः इति । उपसंहरति एष सर्वेश्वर इत्यादिना ।

सूक्ष्मभावनः सूक्ष्मस्य कारणभूतः । योनिः सर्वस्येति प्रभवाप्ययौ भूतानामिति च योज्यम् ।

२१२, १ — २. त्रयमित्यादि । उक्तमवस्थात्रयं जाग्रत्स्वप्नसुषुप्तयस्तथा च तदभिमानित्वेन संबद्धं सावान्तरभेदमात्मत्रयं वस्तुतः सर्वोपरमबाधकं सर्वस्य जगत्कलापस्य इन्द्रियजालस्य वा उपरमः उपशान्तिः स्वस्वकारणेषु लयः तस्य बाधकं प्रतिबन्धकमिति भावः। तत्सुषुप्तं हीति तत् प्रकृतं त्रयं सुषुप्तं सुषुप्ततुल्यं हि खलु । तत्स्वप्नं तत्स्वप्नतुल्यम् । नपुंसकत्वं छान्दसम् । मायामात्रं मिथ्यैव । इति प्रकीर्तितम् । अभियुक्तैरिति शेषः ।

२१२, ३. चतुर्थ इत्यादि । चतुर्थः पादः अपि पूर्वोक्तस्थूलादिभेदापेक्षया चतुरात्मा भवति । एवंविभक्तस्य न सदिति चिदिति एकरस इति अज इति च नामानि सन्ति ।

२१२, ४ — ५. तुरीयावसितत्वाच्चेत्यादि । जागरितस्थस्थूलाद्यात्मचतुष्टयस्य स्वप्नस्थस्थूलादिचतुष्टये लयः, ततः स्वप्नस्थचतुष्टयस्य सुषुप्तिस्थचतुष्टये, ततः सुषुप्तिस्थचतुष्टयस्य तुर्यगतचतुष्टये । अनेन प्रकारेण एकैकस्य जाग्रदादित्रयस्य अनुसारतः स्थूलाद्यात्मानुसारेण तुरीयावसितत्वात् तुरीये समाप्तिं प्राप्तत्वात्, तुरीयत्वं नीतत्वादिति यावत्, तुरीयस्यैवंजातानां चतुर्णां समष्ट्यात्मनाम् ओतत्वादिगुणविशेषा ये सन्ति तेषां तैर्वा ज्ञानसाधनं ज्ञानप्राप्तिः, संभवतीति शेषः । ओतादय उच्यन्ते नृसिंहोत्तरतापनीयोपनिषदि

(अथ त्र्यक्रमप्रतिपादिका सूची)

| | स्थूल | सूक्ष्म | बीजम् | साक्षी |
|---|---|---|---|---|
| जाग्रत् | | | | |
| | ↓१ | ↓२ | ↓३ | ↓४ |
| स्वप्न | | | | |
| | ↓५ | ↓६ | ↓७ | ↓८ |
| सुषुप्ति | | | | |
| | ↓९ | ↓१० | ↓११ | ↓१२ |
| तुरीयम् | | | | |

द्वितीयखण्डे । यथा । 'ओतो ह्ययमात्मा यथेदं सर्वमन्तकाले कालाग्निसूर्योस्रैः । अनुज्ञाता ह्ययमात्मास्य सर्वस्य स्वात्मानं ददातीदं सर्वं स्वात्मानमेव करोति यथा तमः सविता । अनुज्ञैकरसो ह्ययमात्मा चिद्रूप एव यथा दाह्यं दग्ध्वाग्निः । अविकल्पो ह्ययमात्मा वाङ्मनोऽगोचरत्वात् ।' इति । अन्यः प्रकारस्तूच्यते तापनीयकारिकायां विश्वविराजयोरित्यादिना श्लोकपञ्चकेन —

'विश्वविराजयोरैक्यं चिदोतेत्यभिधीयते ।
प्रातिभासिकमूर्तैक्यमनुज्ञातृचिदुच्यते ॥
प्राज्ञसूत्रात्मनोरैक्यमनुज्ञैकरसं विदुः ।
समष्टिव्यष्टितुर्यैक्यमविकल्पचिदीरितम् ॥
ओतृचैतन्यमेवेहानुज्ञातरि विलापयेत् ।
तदनुज्ञानचैतन्यमनुज्ञैकरसात्मनि ॥

केवलं बहिष्प्रज्ञं, तदपि न । न प्रज्ञानघनं च सौषुप्तप्रज्ञमपि न । अदृष्टमेव च बाह्येन्द्रियाग्राह्यं च । इति ।

२१३, ६ सर्वत्र भानुवन्मुमुक्षूणामाधार । मोक्षमार्गे ब्रह्मप्रणव एव सर्वजीवाधारभूतसूर्यस्थानीय इति भाव ।

२१४, ४ — २१७, ८ अस्य भागस्य श्वेताश्वतरोपनिषदन्तर्ग तत्वान्नात्र व्याख्या क्रियते ।

२१७, १०—११. तस्मादिति । किं ब्रह्मस्वरूपमिति नारद कृतप्रश्नस्य विस्तरेणोत्तरं दत्त्वोपसंहरति तस्मादित्यादिना । तस्मात् एवंविधवर्णनवशात् विराट् पूर्वोपदेशोक्त षट्त्रिंशत्तत्त्वातीतं परं ब्रह्म भूतं भव्यं भविष्यत् अतः एवानश्वरस्वरूपं भवतीति सिद्धमित्यर्थ (२०९, ९) ।

२१७, १२ — २१८, ८ इदमपि श्वेताश्वतराद्युपनिषत्स्वन्तर्गत-मिति नात्र व्याख्यायते ।

२१८, १०. सर्वागमान्तार्थविशेषवेद्यम् । आगमान्ताना वेदा न्तानां योऽर्थविशेष उपासनारूपस्तेन वेद्यं ज्ञेयमित्यर्थ ।

२१९, १ शिवाच्युतेत्यादि । शिव तथा अच्युत विष्णु तथा अम्भोरुहगर्भ ब्रह्मा तेषा भू उत्पत्ति लोको वा धार्यते येन तम् ।

२१९, २—७ येनावृत येन व्याप्तम् । पञ्चात्मक पञ्च महाभूतात्मक, पञ्चसु चक्षुरादिषु वर्तमानम् (गर्भोपनिषद्वचनात्) ।

पञ्चीकृतानन्तभवप्रपञ्च पञ्चीकृताना पदार्थानामनन्तभव विनिधोत्पत्तिर्य-स्मिन्दृश्यते तादृश प्रपञ्चो यस्य तम् । अथापि पञ्चीकृतस्वावयवैरसवृत पञ्चीकृतै स्वावयवै स्वयमसवृतम् अनुपहतम् । स्वरूपतेजोमयशाश्वत स्वरूपेण तजोमय शाश्वतश्च तम् ।

२२०, ३. गमनविरोध न करोति । गृहस्थादिना मधुर वचनै स्वस्य गमनस्य विरोधार्थं क्रियमाण प्रयत्न नाङ्गीकरोतीत्यर्थ. ।

२२०, ६—७. सर्वक्रियाकारकनिवर्तक । सर्वाणि यानि क्रियाकारकाणि देहादीनि तेषा निवर्तक ।

२२०, ८—११. परिव्राडित्यादि । मध्यस्थ. पृच्छति परिव्राडित्यादि । स्पष्टम् । उत्तरमाह श्रुति धनवानित्यादिना । नेष निर्धनिक किंतु ज्ञानाज्ञानोभयातीत इत्यादिबुद्ध्या धनवान् अत. सुखीत्यर्थ. ।

---

अथ निर्वाणोपनिषट्टिप्पण्यारभ्यते ।

२२५—२३०. परमहस. सोऽहम् । य परमहस परमात्मा स एवाहम् । इति निश्चयवन्त इत्यध्याहार । परिव्राजका भिक्षुका. । पश्चिमलिङ्गा चरमलिङ्गा. । सन्यासिभिर्यल्लिङ्ग ध्रियते तदेव तेषा चरम लिङ्ग, तदूर्ध्वं तेषा जन्माभावेन लिङ्गान्तरधारणासभवात् । यद्वा शान्तशिश्नव्यापारा इत्यर्थ (ऊर्ध्वरेतस इत्यप्य॰) । यतो लोके सर्वाणि ज्योतींषि पश्चाच्छाम्यन्ति तत शान्ते गौण पश्चिमपदम् । मन्म

थक्षेत्रपाला । मन्मथक्षेत्राणि इन्द्रियाणि पालयन्तीति, विषयविमुखा इति भाव । गगनसिद्धान्त । गगन चिदाकाश, स एव सिद्धान्त भिक्षणा सम्प्रदाय । अमृतकल्लोलनदी । अमृतस्य ब्रह्मामृतस्य कल्लोल तरङ्ग एव नदी स्नानार्था तेषामिति भाव । अक्षय निरञ्जनम् । यदक्षय क्षयरहित तन्निरञ्जन सत्यमिति ध्यात्वि पश्यन्ति । नि सशय ऋषि । स्पष्टम् । निर्वाणो देवता । यो निर्वाण मुक्ति प्राप्त तमेव देवतावत्पश्यति । निष्कलप्रवृत्ति । परमहसस्य प्रवृत्ति प्रवर्तन ध्यानादिव्यापार निष्कला निरवयवा एकेन, 'सधिनी सर्वभूतानाम्' इत्यादिश्रुते (९० पृ, ७प)। निष्केवल ज्ञानम् । नितरा केवल निष्केवल, सर्वविशेषप्रत्यनीक, निर्गुण ब्रह्मेति यावत् । तस्य ज्ञानम् । अस्यास्तीति शेष । ऊर्ध्वाम्नाय । काण्ड द्वयात्मकस्य वेदस्य ऊर्ध्वस्थानीय उपनिषदात्मको भाग एवास्य विचारार्ह । निरालम्बपीठम् । आलम्बनशून्य ब्रह्मैव अस्योपवेशनस्थान, ब्रह्मण्येवास्य मनो विश्राम्यतीति भाव । सयोगदीक्षा । ब्रह्मणि मन सयोग एवास्य दीक्षा व्रतग्रहणम् । वियोगोपदेश । देहादात्मन पृथग्भावो वियोग, स एवानेन शिष्येभ्य उपदेष्टव्य । दीक्षासतोषपावन च । पूर्वोक्तदीक्षाया च य सतोष तदेवास्य पावन कर्म नेतरत् । द्वादशादित्यावलोकनम् । जगद्विलयदर्शनम् । जगत प्रलयकाल एव हि द्वादशादित्या उद्यन्ति, 'नोदिता द्वादशार्का' इत्यादिवचनात् (वेणासहारे, ३ अङ्के), प्रलीन च

जगत् जीवन्मुक्तस्य परमहंसस्य । विवेकरक्षा । आत्मानात्मविवेक एवास्य रक्षा । विवेकवत संसारभयं नास्तीति भाव । करुणैव केलि । केलि विनोद । स्पष्टमन्यत् । आनन्दमाला । ब्रह्मानन्दरूपामेव माला धारयति न पुष्पादिमालामिति भाव । एकान्तगुहाया मुक्तासनसुखगोष्ठी । एकान्त ब्रह्म, 'एकमेवाद्वितीयं यद्गुरोर्वाक्येन निश्चितम् । एतदेकान्तमित्युक्तं न मठं न वनान्तरम् ॥' इति मैत्रेयश्रुते (११६ पृ०) । सैव गुहा तस्या मुक्तासनस्य, त्यक्त मासनं येन तस्य, निरालम्बस्येति यावत्, य सुखं, निरालम्बत्वा-दुत्पद्यमान आनन्द, सैवास्य गोष्ठी मित्रै सह संभाषण, तत् स्थानीयमित्यर्थ । मुक्तासनमिति घेरण्डसंहिताद्युक्तो योगासनविशेष । अत्र त्वौपचारिकोऽयं शब्द इति ज्ञेयम् । अकल्पितभिक्षाशी । अकल्पिता असंक्लृप्ता यादृच्छिकी भिक्षा माधूकरान्नं तदश्नाति, संक्लृप्तान्नं वर्जयतीत्यर्थ । हंसाचार । हंसवद् भ्रमणशील । सर्वभूतान्तर्वर्ती हंस इति प्रतिपादनम् । स्पष्टम् । धैर्यकन्था । कन्थास्थाने धैर्यं धारयितव्यम् । शीतोष्णरूपापनिवारिणी कन्थाऽस्तु मास्तु वा, संसाररूपापनिवारकं तु धैर्यं सर्वथावश्यकमित्यभिप्राय । उदासीनकौपीनम् । कौपीनं गुह्यं तदाच्छादकं वस्त्रं च उदासीनम् उदासीनकोटौ निवेशितं यस्य, जितेन्द्रियत्वमिति यावत् । विचार-दण्ड । विचार ब्रह्मविचार, स एव दण्ड मुख्य चिह्नमस्य । ब्रह्मावलोकयोगपट्ट । योगपट्टोऽपि परमहंसानामनावश्यक । ब्रह्म-

साक्षात्कारोपकारको हि योगपट्ट, तेषा तु ब्रह्मानन्दैक सर्व-दैवास्तीति भाव. । श्रिया पादुका । श्रिया क्षेम. जगति सुखेनावस्थानम् । सैवास्य पादुका । परेच्छाचरणम् । परमहसा. शरीरादिष्वभिमानाभावात् परेच्छयैव स्नानादिकर्माणि कुर्वन्ति न तु स्वेच्छया । 'परेच्छया च दिग्वासा. स्नान कुर्यात्परेच्छया' इति श्रुत्यन्तरात् (१८१ पृ°) । कुण्डलिनीबन्ध. । मनोन्मन्य-वस्थासिद्ध्यर्थं क्रियमाण कुण्डलिन्याख्याया मूलाधारवासिन्या विद्युत्-प्रभाया शक्तेः बन्ध. सुषुम्नायामवस्थापनमनेनानवरत क्रियत इत्यर्थः । 'कुण्डली कुटिलाकारा सर्पवत्परिकीर्तिता । सा शक्तिश्चालिता येन स मुक्तो नात्र सशय ॥' इत्यादिहठयोगप्रदीपिकावचनात् (३, १०८)। परापवाद-मुक्तो जीवन्मुक्त । अपवाद. दोषकथनम् । गुणकथनस्याप्युपलक्षणमेतत् । गुणागुणविवेचन परै अन्यै यस्मिन् कर्तु न शक्यते स एव परापवादमुक्तो जीवन्मुक्त । य न सन्त न चासन्तमित्यादिश्रुते. (१६१ पृ°) । अथवा यो ब्रह्मैवेद सर्वमिति मत्वान्येषु दोषकथन न करोति स छिद्रान्वेषणरहितो जीवन्मुक्त । शिवयोगनिद्रा च खेचरीमुद्रा च । शिवयोगनिद्रा समाधौ मनस शिवे परमात्मनि लय स च, तत्सा-धनभूता खेचर्याख्यातिप्रशस्ता मुद्रा च, एतदुभय परमहसस्य विहित-मित्यर्थ । 'अभ्यसेत्खेचरीं तावद्यावत्स्याद्योगनिद्रित । सम्प्राप्तयोगनिद्रस्य कालो नास्ति कदाचन ॥' इति हठयोगप्रदीपिकावचनात् (४, ४९) । खेचरीमुद्रावर्णनमपि तत्रैव द्रष्टव्यम् । काशीखण्डेऽपि 'कपालकुहरे

जिह्वा प्रविष्टा विपरीतगा । भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ चित्तं चरति खे यस्मात् जिह्वा चरति खे गता । तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता ॥ ' इति (वाचस्पत्ये) । परमानन्दी । नित्यं ब्रह्मानन्दवानित्यर्थः । अथ ब्रह्मैव सत्यं जगन्मिथ्येति परमहंसानुभवविषयीभूतयोर्ब्रह्मजगतोः स्वरूपं विविच्य क्रमेण दर्शयति निर्गतेत्यादिना । निर्गतगुणत्रयम् । स्पष्टम् । विवेकलभ्यम् । आत्मानात्मविवेचनेनाधिगम्यम् । मनोवागगोचरम् । स्पष्टम् । एवं ब्रह्मणः स्वरूपमुक्त्वा जगतः स्वरूपं दर्शयति अनित्यमित्यादिना । जगत् परिदृश्यमानं जाग्रदवस्थायाम् अनित्यं नश्वरं नाशप्रतियोगीति यावत् । तत्र हेतुमाह यदिति । यत् यस्मात् हेतोः जनितं सृष्टम् । यद्यज्जनितं तत्तदनित्यमिति व्याप्तेः । तत्र दृष्टान्तमाह स्वप्नेति । स्वप्ने दृश्यमानं जगत् स्वप्नजगत्, आकाशगतमेघस्य गजाद्याकारः परिणामविशेषः अभ्रगजादिः, ताभ्यां तुल्यं तौ यथात्यन्ताध्रुवौ तथा जगदपीत्यर्थः । परमहंसस्य देहादावात्मभ्रमो नास्तीति प्रदर्शयितुं देहादावप्यनित्यतां दर्शयति तथेति । तथा एवमेव मोहः अविद्या तस्या ये गुणाः सत्त्वादिरूपास्तन्तवः तेषां जालेन कलितं संपादितं देहादिरूपं संघातम् । यदिति शेषः । क्लीबत्वं छान्दसम् । तत् रज्जुसर्पवत्कल्पितम् । स्पष्टम् । तच्च विष्णुविध्यादिशताभिधानलक्ष्यम् । देहात्माध्यारोपवशात् कदाचित् विष्णुः कदाचित् विधिः ब्रह्मा कदाचिच्छिव इत्यादिभिः शताभिधानैः अनेकनामभिः व्यवह्रियत

इति भाव । अङ्कुशो मार्ग । अङ्कुश मनोदमन तदेव मोक्ष मार्ग इत्यर्थ । अन्य सकेत अङ्गीकार न बौद्धादिमते प्रसिद्ध शून्यमस्ति किंतु परेश्वरसत्ता । सत्यसिद्धयोगो मठ । सत्ये ब्रह्मणि सिद्धे मुक्तै सह योग ससर्ग परमहसस्य मठस्थानीय, 'सत्ससर्ग स्वर्ग ' इति श्रुत्यन्तरात् (निरालम्बोप०) । तर्हि स्वर्ग एव तेषा माशाधिरित्याशङ्क्याह अमरपदमित्यादि । अमरा सुरा तेषा पद स्थान न तत्स्वरूप न ब्रह्मस्वरूपमित्यर्थ । तच्च ब्रह्म किंस्वरूप मित्याकाङ्क्षायामाह आदिब्रह्मेत्यादि । स्वसविदेवादिब्रह्मेत्यन्वय । स्वसवित् स्वस्वरूपज्ञानम् । आदिब्रह्म अपरब्रह्मोत्कृष्ट मुख्य ब्रह्म अग्र्य पुरुष । अजपा गायत्री । (१९१ पृ० ९ प०) नारदपरिव्राजकोपनिषदुक्त उच्छ्वा सनि श्वासात्मको हसमन्त्रोऽस्याजपा जपरहिता गायत्रीत्यर्थ । विकार दण्डो ध्येय । विकार चित्तविकार तस्य दण्ट निग्रह ध्येय मनसि कर्तव्य । मनोनिरोधिनी कन्था । बाह्याया शीतादिनिवा रिण्या कन्थाया स्थाने आन्तरा चित्तवृत्तिनिवारिणी कन्था धारणी येत्यर्थ । योगेन सदानन्दस्वरूपदर्शनम् । स्पष्टम् । आनन्दभि क्षाशी । स्पष्टम् । महाश्मशानेऽप्यानन्दवने वास । महाश्मशान लोक कालेन प्रतिक्षण ग्रस्यमानत्वात् । तादृशेऽपि लोके वसन् ब्रह्मभावनावशादानन्दवन एव वसति भिक्षु । एकान्तस्थानमानन्द मठम् । स्पष्टम् । उन्मन्यवस्था । योगिभिरभिलषितो मन्यवस्था तुर्या वस्था तस्यास्तीत्यर्थ । सा चावस्थो यते ब्रह्मबिन्दूपनिषदि । 'निरस्तवि

पयासङ्गं संनिरुद्धं मनो हृदि । यदा यात्युन्मनीभावं तदा तत्परमं पदम् '॥ इति । शारदा चेष्टा । अस्य चेष्टा क्रिया शारदा अघृष्टा अदृढेति यावत् । असक्तः कर्माणि करोतीति भावः । उन्मनी गतिः । उन्मनी उद्भ्रान्तमनस्का गतिः गमनमस्य । उन्मत्तवद्गच्छतीत्यर्थः । निर्मलगात्रं निरालम्बपीठम् । ज्ञानाग्निना निर्मलं परिपूतं यद् गात्रं शरीरं तद् निरालम्बस्य ब्रह्मणः पीठं, ब्रह्मानुसंधानस्य मुख्यं साधनमिति यावत्, भवति, तच्चास्यास्तीति भावः । अमृतकल्लोलानन्दक्रिया । अमृते मुक्तौ यः कल्लोलः हर्षः स एवास्यानन्दक्रिया सुखव्यापारः । पाण्डरगगनमहासिद्धान्तः । पाण्डरं शुद्धं, मिथ्यात्वादिशून्यमिति यावत्, गगनं चिदाकाशः, तदेव महान् सिद्धान्तः अत्र महत्त्वं संशयविपर्ययादिशून्यत्वम् । शमदमेत्यादि । शमदमादीनि यानि दिव्यसत्त्वानि दिव्यगुणाः तेषामाचरणे अनुष्ठाने क्षेत्रं शरीरं तस्य पात्राणि इन्द्रियाणि (८० पृ°, २ प°) तेषु पटुता सामर्थ्यं, शक्तिरिति यावत्, संपादनीयेति शेषः । अत्र शमदमादिव्यवहारपरेन्द्रियक्रिया यस्य तस्यैवेन्द्रियपटुता नान्यस्येति भावः । परावरसंयोगः । परं ब्रह्म अवरः जीवः तयोः संयोगः संबन्धः ऐक्यरूपः अस्येति, सदा जीवब्रह्मणोरैक्यमनुसंधत्त इति भावः । तारकोपदेशः । तारकस्य प्रणवस्य उपदेशः । परमहंसाः प्रणवोपदेशमेवार्हन्ति नेतरोपदेशानिति । अद्वैतसदानन्दो देवता । अद्वैतः स्वेतरशून्यः, सन् त्रिकालाबाध्यः,

आनन्दः आनन्दस्वरूपः, परमात्मा स एवास्य ध्यानार्हो देवता । नियम स्यान्तरिन्द्रियनिग्रहः । स्पष्टम् । भयमोहशोकक्रोधत्यागस्त्यागः । आन्तरत्याग एव मुख्य इत्यर्थ. । परानरैक्यरसास्वादनम् । सदा जीवब्रह्मणोरैक्यानुचिन्तनतत्पर इति भाव । अनियामकत्वनिर्मलशक्तिः । अनियामकत्व परवशीकारराहित्य तेन निर्मला रागादिदोषशून्या या शक्ति. देहादिसामर्थ्य, सैव परमहंसस्यार्हेति शेषः । स्वप्रकाशेत्यादि । स्वप्रकाशे ब्रह्मतत्त्वे शिवस्य ब्रह्मण., 'शान्त शिवमद्वैतम्' इति श्रुते., शक्तिः त्रिगुणात्मिका मूलप्रकृतिः तया साधनेन सपुटित. आवृत., आरोपित इति यावत्, य. प्रपञ्च. अध्यस्त जगत् तस्य च्छेदनम् अपवादेन निरसनम्, 'अध्यारोपापवादाभ्या ज्ञातव्यस्तत्त्वनिर्णय.' इति वचनात्, करोतीति शेषः । तथेत्यादि । पूर्वोक्त प्रपञ्चच्छेदन यथा करोति तथेति सवन्ध. । पद्माक्षः पद्मदलाक्षो विष्णुः, तस्य अक्षि नेत्र, 'तद्विष्णोः परम पदम्' इत्यादिश्रुतेः । चिदादित्य इति परमार्थ. । तन्मयेन कमण्डलुना भावाभावरूपस्य जगतो दहन, करोतीति शेष. । अत्रेद बोध्यम् । उदपात्र जलपानद्वारा यथा तृष्णादाहादिनिवृत्तिसाधन तद्वद्ब्रह्मज्ञान ससारतापनिवृत्तिकरमिति । विभूतीत्यादि । विभूति. नामरूपयोर्निधा सृष्टि. । विभूतीति पाठे स एवार्थ । सा च, तदाधारभूत आकाशश्चेति विभूत्याकाशौ, तदुभयाधारभूत शिव तुरीय परमहंसस्य यज्ञोपवीतस्थानीयम् । तन्मयी शिखा । स्पष्टम् ।

चिन्मयं चोत्सृष्टिदण्डम् । चिन्मयं ज्ञानमयम् उत्सृष्टिस्वरूपदण्डम् । अत्रोत्सृष्टिः अध्यारोपोद्वासनम् । तत्साधकज्ञानमयदण्डं धारयतीत्यर्थः । संतताक्षिकमण्डलुः । संतताक्षि पूर्वोक्तं पलाक्षाक्षि चिदादित्यः । तस्य सांतत्यम् अविच्छिन्नत्वं श्रूयते मैत्रेयोपनिषदि 'हृदाकाशे चिदादित्यः सदा भासति भासति । नास्तमेति न चोदेति' इति (११६ पृ०) । स एवास्य कमण्डलुः संसारतृष्णाशमनाय । कर्मनिर्मूलनं कन्था । स्पष्टम् । मायेत्यादि । अयमर्थः । संन्यासीतरजनैर्मायादयो यावज्जीवं न दह्यन्ते उच्छेद्यन्ते । तस्मात् तेषां मरणेऽशौचं दहनसंस्कारश्च । संन्यासिनां त्वेतद्विपरीतो व्यवहारो दृश्यते । दहन्ति हि ज्ञानाग्निना मायादीन्, खन्यन्ते च न दह्यन्ते, मृतसंन्यासिनो देहस्याशौचाभावात् । तथा श्मशानेऽनाहताङ्गी अस्यनुपहतदेहः स तिष्ठति । इति । निस्त्रैगुण्येत्यादि । त्रयो गुणास्त्रैगुण्यं तद्रहितं निस्त्रैगुण्यं गुणत्रयशून्यं परं ब्रह्मेति यावत् । तत्स्वरूपानुसंधानमेवास्य समयभ्रान्तिं शास्त्रोक्तविधिनिषेधजन्यं पुण्यतीर्थादिविश्वासं हरति अपनयतीत्यर्थः । श्रुत्यन्तरमपि 'उत्तमा तत्त्वचिन्तैव मध्यमं शास्त्रचिन्तनम् । अधमा मन्त्रचिन्ता च तीर्थचिन्ताधमाधमा ॥' इति (११७ पृ०) । कामादिवृत्तिदहनम् । स्पष्टम् । काठिन्यदृढकौपीनम् । काठिन्यं मनसो विषयादिष्वप्रवर्तनरूपं स्थैर्यं तदेवास्य दृढकौपीनम् । चीराजिनवासः । स्पष्टम् । अनाहतमन्त्रः । पूर्वोक्तहंसमन्त्रवदन्योऽप्यजपो मन्त्रोऽस्य वर्तते । स च

मत्र उक्तो हठयोगप्रदीपिकायाम्—'ब्रह्मग्रन्थेर्भवेद्भेदो ह्यानन्दः शून्यसंभवः । विचित्रः क्वणको देहेऽनाहतः श्रूयते ध्वनिः ॥ · कर्णौ पिधाय हस्ताभ्यां यं शृणोति ध्वनिं मुनिः । तत्र चित्तं स्थिरीकुर्याद्यावत्स्थिरपदं व्रजेत् ॥' इति (४, ७०, ८२) । अक्रियैव जुष्टम् । जुष्टं प्रियम् । स्पष्टार्थमन्यत् । स्वेच्छाचारः । स्वेच्छयाचारः व्यापारः, अयं विधिनिषेधाविषय इति भावः । स्वस्वभावो मोक्षः । स्वस्य आत्मनः भावः स्वभावः उपाधिमन्तरेणावस्थानं स एव मोक्षः, इति हि परमहंसानां समयः । परब्रह्मप्लववदाचरणम् । आचरणम् अभिगमनं, मोक्षाभिगमनमिति यावत् । तच्च प्लववत् तारकाख्यप्रणवरूपो यः प्लवः तद्विशिष्टमित्यर्थः । प्रणवानुसंधानेनैव ब्रह्माधिगच्छतीति भावः । ब्रह्मचर्यशान्तिसंग्रहणम् । ब्रह्मचर्यं शान्तिश्चेति द्वन्द्वः । तत्संग्रहणं दृढं ग्रहणम् । यद्वा ब्रह्मचर्येण शान्तिसग्रहणम् । परमहंसैः कर्तव्यमिति शेषः । ब्रह्मचर्याश्रम इत्यादि । अत्र गृहस्थाश्रमे वेदान्तशास्त्राध्ययनस्यावकाशाभावाद् ब्रह्मचर्यवानप्रस्थाश्रमावेव गृहीतौ । संवित्पदेन संविद्विषया गृह्यन्ते । अथवा वित्तानि । उभयं वा । सर्वविषयाणां त्यागो यस्मिन् तद्रूपं संन्यासं, गृह्णातीति शेषः । अन्त इत्यादि । अन्ते प्रारब्धशरीरावसाने अखण्डाकारं परिपूर्णं ब्रह्म, संपद्यत इति शेषः, तदानीं च नित्यम् असंनिवृत्त्यै सर्वसंदेहनाशनम् , अनेन प्राप्तमिति शेषः । स्पष्टार्थ एतदित्यादिर्ग्रन्थशेषः ।

---

अथ भिक्षुकोपनिषट्टिप्पण्यारभ्यते ।

२३३, ५—६. अष्टौ ग्रासांश्चरन्तः । अष्टासु गृहेष्वेकमेकं कबलं गृह्णन्तः । तदुक्तं संवर्तस्मृतौ — 'अष्टौ भिक्षाः समादाय स मुनिः सप्त पञ्च वा । अद्भिः प्रक्षाल्य ताः सर्वा भुञ्जीत सुसमाहितः ॥' इति (१०६ श्लोके) ।

२३३, ६. योगमार्गे ब्रह्ममार्गे । 'भगवन् योगिनश्चर्यां श्रोतुमिच्छामि तत्त्वतः । ब्रह्मवर्त्मन्यनुसरन् यथा योगी न सीदति ॥' इत्यादिस्मृतेः (मार्कं॰ पु॰ ४१, १) । वक्ष्यत्यपि 'तत्र ब्रह्ममार्गे सम्यक्संपन्नाः' इति (२३६ पृ॰, ६प॰) ।

२३४, २. ब्रह्मर्षिगृहे । जातावेकवचनम् । 'बहूदकस्यासंक्लृप्तमाधूकरम्' इति नारदश्रुतेः (१७६ पृ॰, ९—१० प॰) ।

२३६, १. सर्वत्रात्मैव सर्वत्रात्मैवेति पश्यन्ति ।

२३६, १. अथ जातरूपधरा इति । परमहंसा द्विविधाः साम्बरा दिगम्बराश्चेति । तेषां साधारणधर्मानुक्त्वेदानीमुपनिषदन्तरोक्तेभ्यस्तुरीयातीतावधूताख्येभ्योऽभिन्नान् सर्वसंन्यासिभ्य उत्तमान् दिगम्बरानेव विशिनष्टि अथेत्यादिना ।

---

अथ तुरीयातीतावधूतोपनिषट्टिप्पण्यारभ्यते ।

२४१, ७. बाहुल्यः बहुलः ।

२४२, ७—८. स्वविध्युक्तक्रियादिकं तत्तन्मन्त्रपूर्वकम् (२८४ पृ॰, ३ प॰) ।

२४३, १. ज्ञानाज्ञानमपि विहाय । इदं ज्ञानमिदमज्ञानमित्यादिव्यवहारं त्यक्त्वेत्यर्थः ।

२४३, २. वासनात्रयपूर्वकम् । देहवासना शास्त्रवासना लोकवासना (१७२ पृ°, ४—५ प°) चेति वासनात्रयेण सहेत्यर्थः ।

२४३, ८. गोपयित्वा गोपायित्वा । न प्रदर्शयन्नित्यर्थः ।

२४३, ९. सर्वोत्कृष्टत्वसर्वात्मकत्वाद्वैतं कल्पयित्वा । सर्वोत्कृष्टत्वेन सर्वात्मकत्वेन च विशिष्टमद्वैतं परं ब्रह्म कल्पयित्वा ध्यायन् ।

२४३, ९—२४४, १. मत्त इत्यादि । मत्तो व्यतिरिक्तः कश्चिन्नान्योऽस्तीति देवगुह्यं नचिकेतसे मृत्युना प्रोक्तं यद्गुह्यं तद्रूपम् आदिधनं मुख्यं वित्तं, 'परिव्राट् कथं निर्धनिकः सुखी' इत्यादिश्रुत्यन्तरात् (२२० पृ°, ८—११ प°), आत्मन्युपसंहृत्य स्वस्मिन्नुपचित्य ।

२४४, ३. सर्वेन्द्रियोपरम. । सर्वेन्द्रियाणामुपरमो यस्य स. ।

२४४, ३—४. स्वपूर्वापन्नेत्यादि । आश्रमे वाचारे वा विद्यायां वा धर्मे वा पूर्वं सन्यासग्रहणात्प्राक् स्वेनापन्नं प्राभवम् उत्कर्षम् अननुस्मरन् ।

२४४, ६. जलस्थलकमण्डलु. । जलस्थलमेव कमण्डलुर्यस्य स । कमण्डलुरहित इत्यर्थः ।

२४४, ९. स्वात्मनिष्ठानुकूल्येन । स्वात्मन्येव या निष्ठा चित्तैकाग्र्यं तदनुकूलतया ।

२४५, १. प्रणवात्मकत्वे । स्वस्य प्रणवात्मकत्व सपाद्य ।

---

अथ बृहत्संन्यासोपनिषट्टिप्पण्यारभ्यते ।

अस्या उपनिषद. प्रथमोऽध्याय. कठश्रुत्युपनिषदारम्भात्प्रायोऽभिन्न इति पाठान्तरत्वेन तत्र निवेशितः । अन्येषामप्यध्यायाना टिप्पणी प्रायशोऽत्र न क्रियते तद्वाक्याना बहूना नारदपरिव्राजकाद्युपनिषत्सु व्याख्यातप्रायत्वात् ।

२५०, ४. सन्यास पातयेत् । सन्यासिन पातयेत् । पतितं न्यासयेत् । पतिताय सन्यास दद्यात् ।

२५१, १. सप्रत्यवसितानाम् । सन्यासादाश्रमान्तर प्रत्यागतानाम् ।

२५१, ५. आतुरेण विना क्रमम् । आतुरेण । पञ्चम्यर्थे तृतीया । अथवा कर्तव्यमिति शेष. । क्रम प्रकार, विना वर्जयित्वा ।

२५१, ६ — ८. यज्ञोपवीतमित्यादिना प्रयच्छेत्यन्तेन मन्त्रेण यज्ञोपवीतं छिन्देत्त्यन्वय. ।

२५३, २ — ३. त्यजेत्यादि । धर्ममधर्म पुण्यपापे । सत्यानृते ज्ञानाज्ञाने । ज्ञानेन ह्यज्ञानविध्वसानन्तर ज्ञानमप्यनावश्यक तथा त्याज्य भवति, 'उल्काहस्तो यथा कश्चिद् द्रव्यमालोक्य ता त्यजेत् । ज्ञानेन ज्ञेयमालोक्य पश्चाज्ज्ञान परित्यजेत् ॥' इति स्मृते. (उत्तरगीताया १, २१) । येन मनसा त्यजसि तत्त्यज उन्मनीभावाख्या तुर्यावस्थां गच्छेत्यर्थः ।

२५६, ४. लब्धात्मा जिह्वया । जिह्वयैव लब्ध प्राप्त्यर्ह. आत्मा स्वरूप यस्य स ।

२५८, ६. धरेत्यादि । धराया पृथिव्या विवरे बिले, अन्तरिति यावत्, मग्नाना कीटाना समता गता अन्धतामिव प्राप्ता इत्यर्थ ।

२५८, ९. योऽस्मीत्यादि । योऽस्मि य. परमार्थतोऽस्मि सोऽस्मि स एवेदानीमभिज्ञातोऽस्मि । तस्मात् मदभिन्नाय ते तुभ्य नमोऽस्तु ।

२५९, ८—९. मनसा शुद्धमनसा मनसि अशुद्धमनसि छिन्ने । 'मनो हि द्विविध प्रोक्तम्' इत्यादिश्रुते (ब्रह्मबिन्दूप० १) । तथा भावेन शुद्धभावेन गलिते भावे अशुद्धभावे ।

२५९, १०—११. निर्भावमित्यादि । यो मे रिपु शत्रु, तादृश मन इत्यध्याहार, इदानीं निर्भावत्वादिभिर्विशिष्ट केवलानन्दस्वरूपे शुद्ध आत्मन्येव तिष्ठति । अथवा निर्भावमित्यादि क्रियाविशेषणतया ग्राह्यम् ।

२६०, ७. चित्तस्यान्तेऽर्पित चित्तम् । चित्तम् अशुद्ध चित्त चित्तस्य शुद्धचित्तस्य अन्ते अभ्यन्तरे अर्पित प्रापितम्, विलापित मिति यावत् ।

२६१, ९ निर्विभागो जगत्स्थितौ । शत्रुमित्रादिविशेष विना जगति तिष्ठन्निति भाव ।

२६२, ९ — ११. स्वच्छतेत्यादि । उदिता उद्गता आविर्भूता स्वच्छता तथोर्जितता तथा सचेलादि ।

२६३, ५. तस्मान्न संन्यास एष लोकः । तस्मात् जितेन्द्रियत्वात् सन्यासे कृते न एष लोकः सर्वत्र दृश्यमान जन्म, भवतीति शेषः, किंतूत्कृष्टं जन्मास्य संपद्यते वक्ष्यमाणप्रकारेण ( = १७७, १० – १७८, २) ।

२६४, ३ — ४. न परिव्राण्णामसंकीर्तनपरः । तदुक्तं नारदश्रुतौ — 'नाम गोत्रादि चरण——ख्यापयेन्नैव सद्यतिः ॥' इति (१५६ पृ)।

२६५, २. निरीक्षन्त इत्यादि । 'ये पुनर्लोके भिक्षार्थं ग्रामे पर्यटन्त यतिमनुद्विग्नास्तद्भक्तिराहित्येन तद्भिक्षाविषयकोद्वेगरहिताः सन्त. प्रत्यग्दृष्ट्या निरीक्षन्ते तद्गृह यत्नतो व्रजेत् । कुतः । तद्गृहोत्पद्यमानमानावमानसहनपरीक्षार्थमित्यभिप्रायः ।' इत्यप्प० ।

२६५, ७. नैवेत्यादि । अपसव्येन प्रादक्षिण्येनैव [सव्येनैव वा] न तु सव्यापसव्येन वक्रतया गृहाद्गच्छेदित्यर्थः । यथाह मैत्रायणीयश्रुतिः—'भिक्षार्थं ग्राममाविशेदासाय प्रदक्षिणेनाविचिकित्सः' इति (यतिधर्मप्रबोधे) ।

२६६, ५. भिक्षाटनसमुद्योगात् । प्रागिति शेषः । निमन्त्रितं सकेतितम् ।

२६७, ३—४. भुक्तवज्जने इत्यादि । 'भुक्तवन्तो जना

यस्मिन् तस्मिन्नपराह्णभूयिष्ठे काले' इत्यप्प० ।

२६८, ९. न देवतार्चनम् । त्यजेदित्यनुषज्जनीयम् । नात्र बाह्यदेवार्चनं विवक्ष्यते किंत्वान्तरदेवभूतस्यात्मनो ध्यानं, 'न बाह्यदेवाभ्यर्चनं कुर्यात्' इत्यस्यामेवोपनिषदि श्रूयमाणत्वात् (२६४ पृ°, ६ प°) ।

२६९, २. अत्रोपनिषत्कोशेष्वदृश्यमानं पूर्वार्धं विद्यारण्यप्रणीते जीवन्मुक्तिविवेके मेधातिथिवचनत्वेनोदाहृते श्लोके वर्तते—'एकाहात्परतो ग्रामे पञ्चाहात्परतः पुरे । वर्षाभ्योऽन्यत्र यत्स्थानमासनं तदुदाहृतम् ॥' इति ।

२६९, ४. पात्रलोपः । शास्त्रीयपात्रस्य लुप्तत्वात् । जीवन्मुक्तिविवेके पात्रलोभ इति पात्रलोप इति च पाठद्वयमुपलभ्यते ।

२६९, ११—१२. आध्यात्मिकीमित्यादि । आध्यात्मिकीं कथा मुक्त्वा आत्मविद्याविषयादन्य', तथा भिक्षावार्त्तां विना भिक्षावार्त्ताविषयादन्यः, तथा अनुग्रहं विना अनुग्रहविषयादन्य., तथा परिप्रश्नं विना परिप्रश्नविषयादन्यश्च जल्पो वृथाजल्प उच्यत इत्यन्वयः । अत्र भिक्षावार्त्ताशब्देन 'राजवार्त्तादि तेषां स्याद्भिक्षावार्त्ता परस्परम्' (१४६ पृ) इत्यादिश्लोके यथा घृतसूपादिविषयिणी कथा न विवक्ष्यते किंतु भिक्षा देहीत्यादिवचनं तथा भक्तेन निमन्त्रणे कृते भवत्वित्याद्युत्तरम् । अनुग्रहो नाम गृहस्थेन सविनयं कृतस्यारोग्यादिविषयस्य प्रश्नस्योत्तरं, 'परेच्छया च दिग्वासाः' इत्यादि-

श्रुत्यनुरोधेन (१८१ पृ°) । परिप्रश्नश्च परमहंसादन्यस्य संन्यासिनोऽनिषिद्धो मार्गादिविषयकः प्रश्नः ।

२७०, ६. भिक्षाधारः भिक्षाया धारणं संरक्षणं कालान्तरभोजनाय ।

२७०, ७ — ८. बीजम् । 'बीजशून्यमूलफलभक्षणे न दोषः' इति कपिलः (याद°) । ईक्षादिमैथुनम् । अष्टाङ्गं मैथुनम् । त्यक्तमिति । संन्यासयोगेन त्यक्तं यद्गृहधर्मादिकं व्रतं तस्य पुनरनुष्ठानम् ।

२७१, १. स्थावरं जङ्गमम् । उपायनीकृतं वृक्षवाटिकादि पश्वादि चेत्यर्थः ।

२७१, ७. दैन्यभावादित्यादि । तदुक्तं बोधायनेन — 'भूतेभ्यो दयापूर्वं संविभज्य शेषमद्भिः संस्पृश्यौषधवत्प्राश्नीयात्' इति (२, १०, १८, १०) ।

२७१, ८. पक्वमित्यादि । विशेषात्रं याचमान इत्यर्थः ।

२७१, ९ — ११. अन्नदानपर इति । अहं जनेभ्योऽन्नं दास्यामीति यो यतते सोऽन्नदानपरः । वस्त्रादीनामिति । चीरवासाः स्यादिति भावः । 'विशीर्णान्यमलान्येव चैलानि ग्रथितानि तु' इत्यादिश्रुत्यन्तरात् (१४१ पृ°) । वक्ष्यत्यपि 'रथ्यायां बहुवस्त्राणि' इति (२७२ पृ°) ।

२७२, १० — ११. प्रवृत्तिः मोक्षोद्योगः द्विविधा मोक्ता यथा मार्जारन्यायानुरोधेन मर्कटन्यायानुरोधेन चेति । तत्र ओतुः

मार्जारः, मार्जारी प्रवृत्तिरिति यावत्, ज्ञानाभ्यासवत्तामभिमतः, वानरी तु प्रवृत्तिः भाक्तमेव गौणीवेत्यर्थः ।

---

अथ परमहंसपरिव्राजकोपनिषट्टिप्पण्यारभ्यते ।

अत्रापि नारदपरिव्राजकाद्युपनिषट्टिप्पण्या गतार्थत्वात् क्वचित्कचिदेव व्याख्यानं क्रियते ।

२७७, ५—६. वर्णाश्रमधर्मक्रमम् । वर्णाश्च आश्रमाश्च तेषां धर्माश्च तेषां क्रमश्चेति चतुर्णां समाहारद्वन्द्वः ।

२७९, ९ — २८०, १. अथ ग्रामादित्यादिना वाक्येनानग्रे सन्यासमाह, ततो यद्यातुर इत्यादिना श्रोत्रियगृहस्थासंनिधाने आतुरस्य संन्यासम् । तदनन्तरं एष विधिरित्यादिना वीराध्वादिजिगमिषोरपि पूर्वोक्तं जलहोमादिप्रकारं निर्दिशति । अन्ते चात्यातुरस्य सन्यासमाह यद्यातुरः स्यादित्यादिना ।

२८०, ३. अथ स्वस्थस्य साग्नेर्विद्वत्संन्यासमाह स्वस्थ इत्यादिना ।

२८१, ११. अथ विविदिषासन्यासमाह तदधिकारीत्यादिना । तदधिकारी पूर्वोक्तविद्वत्सन्यासाधिकारी । गृहस्थप्रार्थना 'तिष्ठ तिष्ठ महाभाग' इत्यादिका सन्यासिनं प्रति गृहस्थानां प्रार्थना (१६०. ११, ८—९५) ।

२८२, ८. जलावतरणम् । पुण्यतीर्थेषु सोपानेऽवतरणम् । ऊर्ध्वगमनं यानाद्यधिरोहणम् ।

२८४, ७. निर्विकारः मनोविकारशून्यः । नियमानियममुक्तस्त्येत्यत्रानियमो दुराचारः ।

२८७, ५. ब्रह्मप्रणवं प्रशंसत्यप्पयाचार्य : — ' यदर्थविचारं विनाष्टोत्तरशतोपनिषदुक्तसर्वार्थसंवेदनेऽपि न सद्योमुक्तिर्भवेत् । यदर्थविचारं विना ब्रह्मलोकतृणीकारलक्षणप्रबलतरवैराग्यतदुचितशमादिसाधनवतोऽपि न सद्योमुक्तिर्भवेत् । यदर्थविचारं विना हठयोगराजयोगसिद्धियोगज्ञानयोगद्वारा षड्विधसंन्यासोचितज्ञानवतोऽपि न सद्योमुक्तिर्भवेत् । सोऽयं ब्रह्मप्रणवमात्राविभागः सर्वैरपि मुमुक्षुभिरवश्यवेदितव्यः ।' इति । तेनाप्यनुभूतिमीमांसादिषु स्वप्रबन्धेष्वस्यार्थस्तत्र तत्र सूचितः ।

२८७, ६. सर्वकर्मपरित्यक्तः परित्यक्तसर्वकर्मा, ' वाहिताग्न्यादिषु ' इति सूत्रवशात् ।

२८८, ९—१०. देवान्तरध्यानशून्यः । आत्मव्यतिरिक्तदेवस्य ध्यानेन रहितः ।

---

अथ परब्रह्मोपनिषट्टिप्पण्यारभ्यते ।

२९३, ३—७. अयं प्रथमः खण्डः सर्वेष्वपि पुस्तकेष्वतीवाशुद्ध इति ब्रह्मोपनिषद्येव पाठान्तरत्वेन निवेशितः । तथाप्यप्पयदीक्षिताचार्येण कृतमस्य भाष्यमत्रोदीर्यते—

' सन्यासार्हं इति प्रोक्तो यत्रान्तरुपवीतवान् ।
परब्रह्मोपनिषदं व्याख्यास्ये तामिमां शुभाम् ॥

प्राणेभ्यः प्राणिभ्यः जीवेभ्य इत्यर्थः । परब्रह्मपुरे देहे सगुणनिर्गुणजीवप्रत्यगात्मानावविभज्याह । यो विरजत्वादिविशेषणः प्रत्यगात्मा स मधुकरो मधूनीव सर्वानिन्द्रियव्यापारान्नियच्छति सर्वप्रत्याहाराधिष्ठानत्वात् स्वस्याखण्डैकरसाशत्वाच्च । तत्प्रतिबिम्बभूतस्तु जीवात्मा श्येव निरुद्धकर्मकरः स्वापीवाकर्मा स्थितः नित्यनैमित्तिकात्मकशुभकर्मप्रवृत्त्यभावात् । कृषीवल इव काम्यकर्मकर सन् विषयफलमनुभवति । य कर्मसु मर्मभूत नैष्काम्य ज्ञात्वा कर्म कुर्यात् । नैन मायापकर्षति । एन प्रति को जालाख्या ता विक्षिपेत् । न कोऽपीत्येके महान्त आहुः । विश्वतैजसप्राज्ञतुर्याख्याः प्राणदेवता नाडीस्थिताः । सुषुप्त मृतेति अन्यत्र मृतेति चोक्तत्वान्न सुषुप्तवादिनामवकाश । प्राप्तनिष्कामानन्दस्य तुरीयत्वान्नेष्टापूर्तादिलेप. । यथैष देवो जीव. सुप्तौ स्वप्ने चानन्दमभियाति एव तुर्यावस्थाया चात्मज्योतिरानन्दमभियाति । किं तर्ह्येनमात्मान निर्विषयावस्थायाम् आनन्दयतीत्यत आह तदिति । तत्पर सुषुप्तादुपरि प्रतिष्ठापित यच्चित्तमखण्डाकारवृत्त्याख्य शुभ्रवर्ण विशुद्धसत्त्वरूपम् आ समन्ताज्जायते । तदात्मान तुर्य परमानन्दयति निर्विकल्पानन्दमुत्पादयतीत्यर्थ । परस्मात्तस्माद्भूय उपरि तेन समाधिमार्गेणैव स्वमस्थान नियच्छति स्वप्नेऽपि स्वरूपमनुभवतीति भाव । नि सकल्पनिर्वृत्तिकनिर्वासन समाधीनामुत्तरोत्तरमाश्रयणीयत्वाज्जलकाग्दीश्वरात्प्रभुत्वाद्यथेच्छमाजायते । यत् चित्त परसन्धि सन्धिस्थ सदखण्ड भवति अर द्रुत सन्धति

अनुसदधाति तावता समाधिनात्मानमानन्दयति । तत् चित्त पर ब्रह्मैव नापर न जीव । न चापर त्यजति जीवालम्बनस्य किंचिद्विद्य-मानत्वात् । स वेदयोनि परमात्मवित् य एतत कपालाष्टक देहमिव जीवचतुष्पादब्रह्मचतुष्पादयो सप्तसधि. श्रवणादिनिदिध्यासनान्त-सप्तसाधनै. सधायाखण्डत्वेन सधिरहित कृत्वा सेन्द्रयोनि प्रकृति-पुरुषात्मकचिच्छक्त्युपेत अवलम्बते देहमाश्रयते । स जाग्रति न लिप्यते । अन्यदेवस्य स्वाप्नस्य च देव. । सप्रसाद. सुषुप्तो पलक्षित । प्रणवहस. पर ब्रह्मैवाय न प्राणहस कूटस्थ । यो जीव आद्या देवता तस्य जीवस्य प्रणव ब्रह्मत्वमापादयति ॥' इति ।

२९३, ८ — २९७, ५ अथास्य पुरुषस्यान्त शिखोपवीतित्वम् । उच्यत इति शेष । अथ जीवब्रह्मणोरभेदप्रहानन्तरम् अस्य पूर्वोक्तस्य पुरुषस्य अन्त शिखोपवीतित्व शास्त्रसिद्धम् । न तु बहि शिखायज्ञोपवीतधारणम् । अन्त शिखायज्ञोपवीतधारणाधिकारिण दर्शयति ब्राह्मणस्य मुमुक्षोरिति । मुमुक्षोर्भिक्षस्य । अत्र ब्राह्मणस्य मुमुक्षोरिति सामान्यनिर्देश । ब्रह्मचारिगृहस्थवानप्रस्थेषु यो मुमुक्षु सोऽन्त शिखायज्ञोपवीतधारणेऽधिकारी, नानाश्रमनियम इति भाव । बहि शिखायज्ञोपवीतधारणाधिकारिण दर्शयति बहिर्लक्ष्यमाणेति । स्पष्ट मेतत् । अत्रेदमवसेयम् । गृहस्थस्येति ब्रह्मचारिवानप्रस्थयोरप्युपलक्ष णम् । तेषा कर्मित्वमुमुक्षुत्वयो समुच्चयदशाया केवलकर्मित्वदशाया

वा ब्राह्मशिखायज्ञोपवीतधारण एवाधिकार । केवलमुमुक्षुत्वदशाया त्वन्त शिखायज्ञोपवीतधारणेऽधिकार । इति । अथान्तरुपवीतलक्षण सङ्क्षेपेण दर्शयति अन्तरुपवीतलक्षणमिति । अन्तरुपवीतस्य स्वरूप बहिस्तन्तुवत् बहिस्त-तोरिव । अत्र तन्तुपद उपवीते लाक्षणिकम् । बाह्योपवीतस्य यल्लक्षण तदेवान्तर्यज्ञोपवीतस्यापि । तथापीयान् भेद । बाह्य व्यक्त तन्तुरूप च । आन्तरमन्तस्तत्त्वमेलनात्मकमव्यक्त चेति । आन्तरमेव विशिनष्टि न सदिति । अव्यक्तत्वान्न सत् । शास्त्रसिद्धत्वान्नासत् । परस्परविरोधान्नोभयम् । एवमग्रेऽपि द्रष्टव्यम् । भिन्नमभिन्नमित्यत्र चकारात् नञ्द्वयस्यानुषङ्ग । न भिन्नम् आत्मन पृथग्भूत न भवति । नाभिन्न सबन्धितया निर्देशात् । नोभयम् । स्पष्टम् । पुनस्तदेव विशिनष्टि न सभागमिति । न सभागम् अवयवि न भवति, इन्द्रियाग्राह्यत्वात् । न निर्भाग निरवयव न भवति, समुदायात्मकत्वात् । उभयरूप च न भवति परस्परविरोधात् । इति । यज्ञोपवीतपरित्यागे हेतुमाह ब्रह्मात्मैक्येति । ब्रह्मात्मैक्यबोधानन्तरमस्मिन्नुपवीतेऽपि जगतीव मिथ्यात्वभावो जायते । तत कारणात् इद यज्ञोपवीत हेय त्याज्य भवति । तुरीयातीतस्य व्यवहारागोचरत्वमाह पञ्चपादेति । पञ्चपादमिति ब्रह्मणो विशेषणम् । पञ्च पादा यस्येति व्युत्पत्त्या तुरीयातीतमित्यर्थ, निर्गुण ब्रह्मेति यावत् । न किञ्चन व्यवहारविषयत्व नास्तीति भाव, निर्गुणस्य व्यवहारागोचरत्वात् । अथ जीवस्य स्थानविशेषविभागमाह चतुष्पादिति ।

चतुष्पात् पादचतुष्टयविशिष्टं तथाभूतं च तत् अन्तर्वर्ति शरीरान्तर्वर्ति चेति विशेषणसमासः । तथाभूतस्य जीवब्रह्मण जीवरूपस्य ब्रह्मण, सगुणस्येति यावत्, अन्त शरीरस्य अन्त, चत्वारि स्थानानि सन्तीति शेष । तानि स्थानानि दर्शयति नाभीत्यादिना । अत्र क्रमेण आहवनीयाद्यग्निस्वरूपमानितेषु नाभ्यादिस्थानेषु जाग्रदादय चत स्रोऽवस्था क्रमेण जायन्त इति भाव । अत्र प्रकारान्तरेणापि नाभ्यादिस्थानेषु अग्निभावना प्राणाग्निहोत्रोपनिषद्युच्यते । यथा—'चत्वारोऽग्नयस्ते किंनामधेया । तत्र सूर्योऽग्निर्नाम सूर्यमण्डलाकृति सहस्ररश्मिभि परिवृत एकर्षिर्भूत्वा मूर्ध्नि तिष्ठति यस्मादुक्त । दर्शनाग्निर्नाम चतुराकृतिराहवनीयो भूत्वा मुखे तिष्ठति । शारीराग्निर्नाम जराप्रणुदा हविरवस्कन्दत्यर्धचन्द्राकृतिर्दक्षिणाग्निर्भूत्वा हृदये तिष्ठति । तत्र कोष्ठाग्निर्नामाशितपीतलीढखादितानि सम्यक् श्रपयित्वा गार्हपत्यो भूत्वा नाभ्यां तिष्ठति ।' इति । चतसृणामवस्थाना प्रत्येकमभिमानिदेवता आह जागरिते इत्यादिना । अत्र तुरीयेऽवस्थाऽवस्थावतोरभेदाध्यवसायाभिप्रायेण तुरीयमक्षरं चिन्मयमिति व्यपदेश । तुरीय चतुर्थम् अक्षर नाशाप्रतियोगि चिन्मय ज्ञानमयम् । अथ बाह्ययज्ञोपवीतस्य यानि लक्षणानि तान्यान्तरयज्ञोपवीतेऽपि दर्शयति तस्मादित्यादिना । अत्रायमाशय । लोके हि बाह्ययज्ञोपवीतकरणस्य प्रकारस्त्वेवम् । आदौ कार्पासेन तन्तु निर्माय त चतसृषु अङ्गुलीषु षण्णवतिसङ्ख्यया सवेष्ट्य त त्रिवृत कुर्वन्ति त्रिवृत्कृत च त

पुनस्त्रेधा निमजन्ति । तथा सति स तन्तुर्द्वात्रिंशत्सङ्ख्याकवेष्टन-
वान् नवतन्त्वात्मकश्च भवति । एवं संस्कृतं तन्तुं पुनः
पृथगुपलभ्यमानाकृतित्रयं मेलयित्वा आद्यन्तौ पृथगग्रौ संवेष्ट्य त्रिगु-
णीकृते च तस्मिन्नेकैकमपि गुणं ताभ्यां सकृत्सकृत्संवेष्ट्य पृथग्भू-
ताबाद्यन्तावेकीकृत्य ग्रन्थिविशेषे ग्रन्थिविशेषं कुर्वन्ति तमेव ब्रह्मग्र-
न्थिमाचक्षते । इदमेव ब्राह्मयज्ञोपवीतमिति । तस्मात् स्थानचतुष्टये
ऽवस्थाचतुष्टयलाभात् । चतसृणामवस्थानां समाहारः चतुरवस्था ।
स्त्रीलिङ्गं छान्दसम् । चतस्रः अङ्गुलयः प्रमाणं यत्रेति चतुरङ्गुलं तच्च
तद्वेष्टनं चेति ज्ञात्वेत्यध्याहारः । एवं च या चतस्रोऽवस्था जाग्रदादय
ता एव ब्राह्मयज्ञोपवीतीयचतुरङ्गुलवेष्टनमिव ज्ञात्वेत्युक्तं भवति । एव
मेवाग्रेऽपि सर्वत्र ज्ञेयम् । अत्र षण्णवतितत्त्वानि वराहोपनिषदुक्तानि
द्रष्टव्यानि । तानि तन्तुवत् तन्तुमिव विभज्य विविच्य, ज्ञात्वेति
यावत् । तदाहितं त्रिगुणीकृत्य । आहितं तन्तुदृष्ट्या भावितं तत्
षण्णवतितत्त्वात्मकं सूत्रं त्रिगुणीकृत्य त्रिवृदात्मकं कृत्वा । द्वात्रिं
शत्तत्त्वनिष्कर्षमापाद्य । तस्मिन्नेव सूत्रे द्वात्रिंशत द्वात्रिंशत्सङ्ख्याकं
तत्त्वनिष्कर्षं तत्त्वसंग्रहम् आपाद्य संपाद्य, षण्णवतितत्त्वात्मकं सूत्रं
त्रेधा विभज्येति यावत् । ज्ञानपूतं त्रिगुणस्वरूपं त्रिमूर्तित्वं पृथग्वि-
ज्ञाय । अत्र त्रिरावृत्ते द्वात्रिंशत्तत्त्वात्मके तस्मिन् त्रिमूर्तित्वं ब्रह्मवि-
ष्ण्वादिमूर्तिस्वरूपत्वं पृथक् त्रिवृत्स्वरूपतन्तुत्रिके प्रत्येकं विज्ञाय
ध्यात्वा । त्रिमूर्तित्वं विशिनष्टि त्रिगुणेति, सत्त्वरजस्तमोगुणात्मकमिति

यावत् । पुनस्तदेव विशिनष्टि ज्ञानेति । ज्ञानेन तत्त्वज्ञानेन पूत शुद्धम् । तस्मिन्नेव गुणे नवस्वप्यवयवेषु प्रत्येक क्रमेण नवप्रजापतीना दृष्टि कर्तव्येत्याह नवेति । नवसख्याका ब्रह्माण. प्रजापतय पुराणादिषु प्रसिद्धा तेषा आख्या. नामानि येषा ते तथोक्ता. । ये नवसख्याका गुणा तन्तुविशेषा. तैरुपेत, युक्तमित्यर्थ., ज्ञात्वा विदित्वा नवमानमित पुनस्त्रिगुणीकृत्य नवमान नवत्वसख्या तेन मित परिमित, तन्तुमिति शेषः, पुनस्त्रिगुणीकृत्य त्रिगुण कृत्वा । अत्र त्रिगुणीकरण त्रयोऽपि गुणा. यथा पृथगुपलभ्येरन् तथेति बोध्यम् । सूर्येन्द्वग्निकलास्वरूपत्वेनैकीकृत्य । पूर्वोक्त उपवीत सूर्यादिस्वरूपत्वेन एकीकृत्य एकध्यानविषय कृत्वा । आद्यन्तयोरेकत्वमपि । कृत्वेति शेष । स्पष्टमन्यत् । मध्ये त्रिरावर्त्य । मध्ये ग्रन्थिकरणस्थले त्रिरावर्त्य त्रि. सवेष्ट्य । अमाभ्यामिति शेष । ब्रह्मविष्णुमहेश्वरत्वमनुसधाय । एकैकस्यामावृत्तौ क्रमेण ब्रह्मविष्णुमहेश्वरत्वमनुसधाय । आद्यन्तमेकीकृत्य । आद्यन्तम् आदिमन्त च एकीकृत्य मेलयित्वा चिद्ग्रन्थ्यद्वैतग्रन्थि कृत्वा । अयमभिप्राय । ग्रन्थिद्वयैक्यात्मके ब्रह्मग्रन्थौ पूर्वस्मिन् चिद्भावनाम्, उत्तरस्मिन् अद्वैतभावना च कुर्यादिति । उपवीतपरिमाणप्रदर्शनपुरःसर तस्मिन्ब्रह्मदृष्टिं दर्शयति नाभ्यादीति । ब्रह्मबिलपर्यन्त प्रमाण ब्रह्मबिलप्रमाणम् । ब्रह्मबिल ब्रह्मरन्ध्रम् । नाभि. आदि यस्य तत् नाभ्यादि नाभ्यादि ब्रह्मबिलप्रमाण यस्य तादृशम् । पृथक्पृथक्

मत्येकम् । अवयवगतसख्याभिरिति शेष । सप्तविंशतितत्त्वसम्बन्धम् । सप्तविंशतेस्तत्त्वाना सम्बन्धो यस्मिंस्तत्तथोक्तम् । त्रिगुणोपेत सत्त्वरज स्तमोगुणोपेतम् । यद्वा नवतन्त्वात्मकगुणत्रयोपेतम् । किंच त्रिमूर्ति-लक्षणलक्षितम् । त्रिमूर्तय ब्रह्मविष्णुरुद्रा तेषा यानि लक्षणानि तैर्लक्षितम् । अत्र उपवीते त्रिमूर्त्यादिलक्षण त्रित्वसख्यया बोध्यम् । एव त्रित्वसख्याविशिष्टमप्युपवीतमनुसधानेनाद्वितीयब्रह्मात्मता आपाद्य नीत्वा । उपवीतस्य धारणप्रदेश प्रदर्शयति वामासादीति । विभाव्य मनसा ध्यात्वा । स्पष्टमन्यत् । उपवीते ब्रह्मदृष्टिफल दर्शयति आद्यन्तेति । आद्यन्तयोर्ग्रह ग्रहण, सघटनमिति यावत्, तद्रूप समेलन यस्मिन् तदुपवीतम् एव उक्तप्रकारेण एकम् अद्वितीय मूल जगत्कारण ब्रह्म ज्ञात्वा स्थितेन सर्व ज्ञात भवतीति शेष. । ज्ञाते चोपादाने सर्वमप्युपादेय ज्ञात भवतीत्यत्र दृष्टान्तमाह सर्वमित्यादिना (छा॰ उप॰ ६, १, ३) । इत परमन्त शिखोपवीता-द्यधिकारिणो दर्शयति हसेत्यादिना । यदा यति हसेति नाम भजते तदा अन्त शिखोपवीती स्यादिति हसस्य अन्त शिखोपवीतित्व निश्चित्य पूर्वोक्तहसनिष्ठ ब्राह्मणत्व ब्रह्मध्यानार्हत्वरूप तन्निष्ठ यतित्व च अन्त शिखोपवीतित्वरूप, निश्चिनुयादिति शेष । बाह्य-शिखायज्ञोपवीतयोस्त्यक्तत्वात् अलक्षितेति विशेषणम् । एवम् उक्त प्रकारेण गृहस्थस्य शिखायज्ञोपवीतित्व ज्ञेयम् । किन्तु तद्बहिर्लक्षि-तम् । आभासब्राह्मणस्य केशसमूहशिखाप्रत्यक्षकार्पासत तुकृतोपवीति-

त्वम् । स्पष्टम् । अत्रेदमवधेयम् । गृहस्थाभासब्राह्मणयोः शिखायज्ञोपवीतयोः साम्येऽपि गृहस्थशिखायज्ञोपवीतयोः कर्मज्ञानोपयोगित्वात्तदात्मना व्यपदेश, अन्यस्य तु केवलकेशसमूहत्वेन कार्पासतन्तुरूपत्वेन च तयोर्व्यवहार कर्मज्ञानानुपयोगित्वादिति । अत्रैवमप्पय्यशिवाचार्यो व्याचष्टे यतित्वमित्यादि —— ' इह ब्राह्मणत्वगमक शिखोपवीतित्व त्रिविध दर्शयति । यस्य हंसमन्त्रार्थकूटस्थदर्शनेनालक्षितान्त शिखोपवीतित्वमस्ति स यतिर्मुख्यब्राह्मण । यस्य कर्मशिखा स्वाश्रमोक्तनित्यकर्मैव शिखा ब्रह्मापरोक्षज्ञानमेवोपवीत च बहिर्लक्ष्यते स गृहस्थ गौणब्राह्मण । यस्य केशसमूह एव शिखा कार्पासतन्तुकृतमुपवीत च भवत स ब्राह्मणाभास. ।' इति । प्रसङ्गात्प्रतिसर लक्षयति चतुर्गुणीकृत्येति । चतुर्विंशतितत्त्वापादनतन्तुकृत्यमिति क्रियाविशेषणमेतत् । तन्तुकृत्य चतुर्विंशतितत्त्वापादन यथा स्यात् तथा चतुर्गुणीकृत्य प्रकृत सूत्र, कर्म नवतत्त्व नवानि तत्त्वानि यस्मिन् तत्तथोक्त च कृत्वा एकमेव पर ब्रह्म, ध्यायेदिति शेष । अत्र एकपरब्रह्मात्मताध्यानेन एकीकरणमप्याक्षिप्यते । तत् तथाध्यात सूत्र कर्म बहुमार्गा त्रिविधा सस्मृतिमार्गा. तेषु प्रवृत्ति प्रवृत्तिहेतु, कारणे कार्यत्वोपचार आयुर्घृतमितिवत्, कल्पयन्ति अध्यवस्यन्ति । अभिज्ञा इति शेष । अथ यत्यादीनामुपवीतादिभेदेऽपि मुक्तेस्तत्साधनस्य च सर्वसाधारण्य तत्र ब्रह्मैकत्वस्य हेतुता च दर्शयति सर्वेषामित्यादिना । अत्र ब्राह्मणत्व, तत्र ब्रह्मज्ञानस्वरूपेण । स्पष्टमन्यत् ।

एवं मुक्तिसाधनस्य ब्रह्मज्ञानस्य सर्वसाधारण्येऽपि तत्साधनभूता वर्णाश्रमाचारादयो भिन्ना इत्याह वर्णाश्रमेत्यादिना । शिखा च यज्ञोपवीतं च शिखायज्ञोपवीतमिति समाहारे एकत्वम् । स्पष्टमन्यत् । सामान्यतो वर्णाश्रमभेदात्मातस्य शिखायज्ञोपवीतभेदस्य यतिविशेषविषयऽपवादमाह एकमेवेति । अपवर्गस्य अपवर्गसाधनब्रह्मज्ञानवत यते, विद्वत्संन्यासिन इति यावत् । अत्र साधनस्य फलत्वेनोपचारः । विद्वत्संन्यासिनः शिखायज्ञोपवीतयोरैक्यत्वेऽभियुक्तोक्तिं प्रदर्शयति शिखेति । अत्र एकमेव प्रणवस्वरूपं ब्रह्म विद्वत्संन्यासिनः शिखायज्ञोपवीतमूलमिति पण्डितोक्तिराख्या । विद्वत् संन्यासिनः परमार्थतः शिखोपवीतसंधानाभावेऽपि ब्रह्मस्वरूपेषु हंसप्रणवनादेषु तद्दृष्टिकरणमाशरीरपातं भवेदित्याह हंस शिखेत्यादिना । अत्र संधानं स्वस्मिन् शिखायज्ञोपवीतयोः संवन्धनम् । हंसादिषु शिखादिदृष्टिरेव धर्मो नान्य इत्याह एषेति । एवं द्वैतदृष्टिमतः कथमद्वैतब्रह्मप्राप्तिरिति शङ्कते तत्कथमिति । तत् द्वैतदर्शनं कथं मोक्षसाधनमिति शेषः । अद्वैतदर्शनस्यैव तत्साधनत्वादिति भावः । पूर्वोक्तशङ्कां परिहरन्नुपसंहरति प्रणव इत्यादिना । प्रणवादित्रयं त्रिवृत्सूत्रमिव हृदयच्छिन्नचैतन्ये आरोपितं वर्तते । त्रिप्रकारं तत् आरोपितब्रह्म अभिमानचैतन्यरूपं विद्धि इति । एवं शिखायज्ञोपवीतयोश्चिद्रूपता ज्ञात्वा बाह्ययोस्तयोः परित्यागं कुर्यादित्याह प्राप्यैवेति । स्पष्टम् ।

अथ बृहदवधूतोपनिषट्टिप्पण्यारभ्यते ।

३०४, ५—९. तस्य प्रियमित्यादि । अत्रेदं बोध्यम् । आनन्दवल्ल्याः पञ्चमेऽनुवाके आनन्दमयात्मनः पुरुषविधत्वमेवं प्रदर्श्यते —— 'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ।' इति । तस्यार्थः । प्रियं सौम्यता । आत्मा देहस्य मध्यमो भागः । पुच्छं तदधोभागः । स चान्येषां प्रतिष्ठा । यथा निषण्णस्य पक्षिणः पुच्छं प्रतिष्ठा तद्वत् । एवमेव प्रकृता श्रुतिरपि व्याख्येया । तत्र गोष्पदायते सुखेन प्राप्यत इत्यर्थः । 'पूर्वोक्तं ज्ञात्वा आनन्दः शरीरमिति को न पश्यति' इति भावः । ननु पादादि रूपस्याधोभागस्यापकृष्टत्वात् 'ब्रह्म पुच्छं प्रतिष्ठा' इति वाक्येन ब्रह्मणोऽप्यपकृष्टत्वं प्रसज्येतेत्याशङ्क्याह गोवालसदृशं शीर्षे इत्यादि । गोवालसदृशम् अतिसूक्ष्मं, ब्रह्मेति यावत्, परमार्थतः शीर्षे एव तिष्ठति, 'तुरीयं मूर्ध्नि संस्थितम्' इति श्रुतेः (९० पृ°, ३ प°) । यद् गोवालसदृशं ब्रह्म परमार्थतो न देहस्य मध्यमभागेऽधोभागे वा किंतु शीर्षे एव तिष्ठति तत् पुच्छं प्रतिष्ठेति अधोभाग आधार एवेति पुच्छाकारेण कारयेत् भावयेदित्यर्थः । एवं तत्प्रतिष्ठाभूतं ब्रह्म चतुष्पर्वं कृत्वा 'तस्य प्रियम्' इत्यादिश्लोकानुरोधेन चतुर्मार्गध्यानयोग्यं ये कुर्वन्ति ते यान्ति परमां गतिम् । 'इति' ।

३०४, १२. तत्संसरणम् अवधूतस्य संसरणं स्वैरविहरणं यथेच्छपर्यटनम् । तत्तु स्वैरम् अशब्दम्, अधृष्टमिति यावत्,

'शारदा चेष्टा' (२२८ पृ॰, ४ प॰), 'कीटवद्विचरेन्महीम्' (१८३ पृ॰, १२ प॰) इत्यादिश्रुतेः ।

३०५, १. सदेत्यादि । साग्रहणीनाम अश्वमेधात्प्राक् कर्तव्यातिप्रशस्ता काचिदिष्टिः । तया सहाश्वमेधम् । तदुभयतुल्यमिति भाव । अन्तर्याग प्राणाग्निहोत्र यजते ।

३०५, २—३. कृत्स्नमित्यादि । उक्तमश्वमेधादिकर्म स्वैर स्वेच्छाचार सन् न विगायेत् किंतु मयापि तत्क्रियत इति चिन्तयेत् ।

३०६, २. ऐहिकेत्यादि । ऐहिकामुष्मिकफलसमूहसिद्ध्यर्थम् ।

३०६, ४. प्रतियोगिपुर सर विपरीतेन सह । अत्रोत्तरार्धाभावे उच्यत इति शेष कर्तव्य ।

३०७, ३. द्रष्टारथेत्कल्पयन्तु । मम निद्रादेर्द्रष्टार शरीराधीनः स इति कल्पयन्तु न वेत्यर्थ ।

३०७, ४. गुञ्जेत्यादि । गुञ्जानाम गुटिकाकार क्षुद्र किंचित् फलम् । तच्च लोहितवर्णम्, अत एवाग्नित्वेन रूपित, कृष्णबिन्दुसहित च, अत एव बिन्दोर्धूमत्वेन रूपणम् । स्पष्टमन्यत् ।

३०७, ११ वासनातोपकल्पते । वासनात उपकल्पते । सधिश्छान्दस ।

३०८, ३. बाधिकर्मेत्यादि । 'किं ध्यानमविपर्यये' इति पूर्वोक्तस्य दृढीकरणायाह बाधिकर्मेत्यादि । बाधिकर्म अद्वैतज्ञानविरुद्ध

सविकल्पध्यानादिकं कर्म व्यवहृतिं पश्यन् व्यवहारत्वेन गणयन् कुत्वा ध्यायाम्यहं, ध्यानेन न मे प्रयोजनमिति भावः ।

३१०, ३—४. अहो ज्ञानमित्यादि । इदानीं ब्रह्मज्ञानं तत्सुखं चानुस्मृत्य तुष्यति अहो ज्ञानमिति । पुनश्च सम्यग्ज्ञान-साधनं शास्त्रं तदुपदेष्टारमाचार्यं चानुस्मृत्य संतुष्यति अहो शास्त्रमिति । (रामकृष्णस्य पञ्चदशीव्याख्यायाम्) ।

३१०, ७. ब्रह्महत्यात् ब्रह्महत्यायाः । कृत्याकृत्यात् कृत्यस्य विहितस्य कर्मणोऽकृत्यात् अननुष्ठानात् ।

---

अथ याज्ञवल्क्योपनिषट्टिप्पण्यारभ्यते ।

३१४, ३. यो भवेत्पूर्वसंन्यासी स्वापेक्षया पूर्वं संन्यस्तो यः । तुल्यो वै धर्मतो यदि स्वसदृशो यदि संन्यासधर्मतः कुटीचकादि-क्रमापेक्षया, स्वस्मादवरः संन्यासी न चेदिति भावः ।

३१४, ७—१०. नामादिभ्य इत्यादि । आत्मवान् सर्वं ब्रह्मीभूतादपकृष्टमिति सर्वमात्मैवेति वा कृत्वा कस्मैचिदपि न प्रणमेत् सर्वेभ्यो वा प्रणमेदिति श्लोकद्वयस्य तात्पर्यम् ।

३१६, १. चारुदारुणम् । प्रथमं चारु पश्चाद्दारुणमित्यर्थः ।

३१६, २. मुग्धचेतसः । अपीति शेषः ।

३१६, ६. सुसमुद्गिकया दृढसंपुटिकया इति योगवासिष्ठता-त्पर्यप्रकाशे (१, २१, २३) ।

३१७, ६—७ रिपौ वद्धे इत्यादि । यथा स्वदेहस्यावयवेषु कस्यचन कोपो नास्ति तथा स्वदेह-बद्धरिप्वोरनन्यत्वे दृष्टे सति रिपावपि कोपो नोपपद्येतेति तात्पर्यम् । एकश्चासौ आत्मा च एकात्मा, तस्य भाव ऐकात्म्य, सम च तत् ऐकात्म्य च समैकात्म्यम् ।

---

अथ शाट्यायनीयोपनिषट्टिप्पण्यारभ्यते ।

३२२, ४ विष्णुक्रान्तम् । विष्णुरूपेण यो लोकान् क्रान्तवान् तम् ।

३२२, ६—११ अथेति । अथ ह प्रसिद्धि वाक्यारम्भोद्द्योतन च । ये श्रोत्रिया अकामहता, ते इत्यध्याहार, ते यत्सनातन पर ब्रह्म अधीयु यश्च शान्तो दान्त उपरतस्तितिक्षुरनूचान समानश्च स यत्पर ब्रह्म अभिजज्ञौ, तत् तादृश ब्रह्म त्यक्तपणोऽनृण पुरुषो विदित्वा मौनी सन् यत्र कुत्राश्रमे वसेत् । इति योजना । आश्रमे यत्र कुत्रेत्यत्र ब्रह्मचर्ये गार्हस्थ्ये वानप्रस्थे वेत्यर्थ ।

३२३ १—४ अथाश्रममित्यादि । चरममाश्रम सन्यासाश्रमम् । यथापपत्ति यावच्छक्ति । पञ्चमात्रा वक्ष्यमाणा । विष्णुलिङ्गी । विष्णुलिङ्गमुच्यते दर्शेण — 'वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन त द्विना । लिङ्ग तु वष्णव तेषा त्रिदण्ड सपवित्रकम्' इति (वै॰) ।

३२३, ८ यावदुत्क्रान्ति । भवतीति शेष ।

३२३, ९. व्यक्तमव्यक्तं बाह्यमान्तरम् । तत्र बाह्यं लिङ्गं दृश्यमानं त्रिदण्डादि । आन्तरं लिङ्गं तु स्मर्यते मार्कण्डेयपुराणे — 'वाग्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः । यस्यैते नियता दण्डाः स त्रिदण्डी महायतिः ॥' इति (४१, २२) ।

३२५, ३. वेदशिरःप्रविष्टाः वेदान्तशास्त्रव्यापृताः ।

३२५, ५. वृक्षं संसारं, वृक्षमूलं ब्रह्म । यद्वा वृक्षं वेदं, वृक्षमूलं प्रणवम् । 'वेदो वृक्षस्तस्य मूलं प्रणवः' इति बोधायनवचनात् (२, १०, १८, २५) ।

३२६, ८—९. यथा प्रादुर्भवन्ति तथा भवन्ति । इहैवामृता भूत्वा मरणानन्तरं विष्णुं गच्छन्ति, 'विष्ण्वात्मका विष्णुमेवापियन्ति' इति पूर्वोक्तेः ।

३२७, ५—६. पालीत्यादि । कुटुम्बी पात्रदण्डशिखोपवीतैरेव कुटुम्बी । एतानि भर्तव्यानीत्यर्थः । कुटुम्बशब्दो हि भर्तव्यवाची ।

३२७, ९ — ३२८, १. मृदित्यादि । तस्य पात्रं मृन्मयादि, तस्य कन्था च न समीचीनं क्षौमं किंतु क्षीणं जीर्णं, अथवा तृणं तार्णं पर्णं पार्णं वा आच्छादनं स्यात् । अथवाऽन्यैर्यद्विमुक्तं वस्त्रं तदहृतमहृतत्वेन स्वीकार्यम् ।

३२८, ९. अलक्षितशीलवृत्तः । 'अव्यक्तलिङ्गा अव्यक्ताचाराः' इति श्रुत्यन्तरात् (६९ पृ°) ।

३२९, १. न चोद्विजेदित्यादि । तदुक्तं महाभारते आश्व-

मेधिकपर्वणि — 'परं नोद्वेजयेत्कश्चिन्न च कस्यचिदुद्विजेत्' इति ।

३३०, ६. अखिलेनात्मभासा । कृत्स्नेनापि ब्रह्मतेजसा, तद्धेतुभूतेन ज्ञानेनेति यावत् ।

३३०, १०. नैषाम । उक्तानां त्रयाणां त्यक्तविष्णुलिङ्गानाम् ।

३३२, ३. नासमाय नानृजवे । वक्ष्यत्यपि 'असूयकायानृजवे शठाय' इति ।

३३२, ७. शेवधिष्टेऽहमस्मि शेवधिस्तेऽहमस्मि ।

३३२, १०. विद्यादेवतयोक्तमनुवदति यमेवेत्यादिना । तस्मात् यमेव विद्यात् कश्चित् शुचिमप्रमत्तमित्यादि ।

३३३, ४—५. यथैव ते इत्यादि । भोजनीयाः उपकर्तव्याः । यस्मात्ते गुरोरुपदेशस्यानर्हाः इति भावः । तथैव तस्मात् तत् गुरुमुखात्प्राप्यमाणं श्रुतं तान्न भुनक्ति तेषां नोपकरोतीत्यर्थः ।

---

अथ लघ्ववधूतोपनिषट्टिप्पणी ।

३३७, २—३. यमेत्यादि । व्याख्यास्यते इति शेषः ।

३३८, २. ध्यानस्य विस्मृतिः सम्यक् । निर्विकल्पसमाधौ ।

३३८, ५. अमनःप्राणः । तदुक्तं हठयोगप्रदीपिकायां—'यदा संक्षीयते प्राणो मानसं च प्रलीयते' इत्यादिना (४, ६) ।

समाप्ता चेयं संन्यासविषयकोपनिषत्संग्रहटिप्पणी ॥

---

# I.

## READINGS OF THE GRANTHA EDITION OF THE 108 UPANIṢADS.[1]

p. १८, l. 2 : दारानाहृत्य सदशान्.
,, १३१, ,, 4 : गार्हस्थ्यं.
,, १३३, ,, 8 : °निहृत्यन्वेषणमिति.
,, १७१, ,, 2 : शारीरस्य देहिनो.
,, १७२, ,, 2 : शास्त्रज्ञानात्पापपुण्यलोकानुभव°.
,, १७६, ,, 5—6 : गिरा प्राण्यादीना संभाषणम्.
,, १७८, ,, 10—11 : अवस्थाभेदादवस्थेश्वरभेदस्तासु चतुर्दशकरणाना.
,, १८०, ,, 9 : मुण्डनेन.
,, १९०, ,, 1 : शरीरेण जीव·
,, २२९, ,, 5—6 : संततास्क्षिकमण्डलम् (for °लुम्).
,, २५२, ,, 8 : सर्वधा.
,, २६४, ,, 9 : करपात्रेण वा कालं नयेत्.
,, २६४, ,, 12 : संचलनार्थाय.
,, २९५, ,, 5 : आद्यन्तरैकत्वमपि.
,, २९६, ,, 6 : चतुर्विंशतितत्त्वासादनतन्तुरुत्सम्.
,, ३०४, ,, 9 : चतुष्पदम्.
,, ३०७, ,, 11 : विपर्यासश्चिराभ्यस्त°.

---

[1] *Cf.* Preface, p VII

# II

# INDEX OF UNCOMMON WORDS AND FORMS[1]

## (छान्दसादिपदानामकारादिक्रमेण सूची)



[1] Not including anomalies due to external Sandhi.—The first numeral refers to the page, the second (and third) to the line on the same page.

